# DAIVATABRAMHANA

AND

# SHADBINGSHABRAMHANA

OF THE

## SAMAVEDA

WITH THE COMMENTARY OF

## SAYANACHARYA

EDITED AND PUBLISHED BY

*PANDIT JIBANANDA VIDYASAGARA, B. A.*

*Superintendent, Free Sanskrit College, Calcutta.*

SECOND EDITION

CALCUTTA:

PRINTED AT THE SARASWATI PRESS.

প্রিণ্টার শ্রীক্ষেত্রমোহন মুখোপাধ্যায়। ২০ নং ঝামাপুকুর লেন।

1881.

To be had from Pandit Jibananda Vidyasagara, B. A.
Superintendent Free Sanskrit Colleg, *Calcutta.*

# एतानि मुद्रितसंस्कृत पुस्तकानि

| | |
|---|---|
| ...बोध व्याकरणम् | ३।० |
| ...तुरूपादर्शः | २ |
| ...ब्दस्तोम महानिधिः ( संस्कृत अभिधान ) | १० |
| ...सिद्धान्तकौमुदी सरला टीका सहिता | ११ |
| सिद्धान्तविन्दुसार (वेदान्त) | ॥ |
| ...लादानादिपद्धतिः(वङ्गाक्षरैः) | ४ |
| ...गयाश्राद्धादि पद्धतिः | १ |
| ...ब्दार्थरत्न | ॥। |
| ...वाक्यमञ्जरी (वङ्गाक्षरैः) | । |
| छन्दोमञ्जरी तथा वृत्तरत्नाकर सटीक | ॥✓ |
| वेणीसंहार नाटक सटीक | १ |
| मुद्राराक्षस नाटक सटीक | १॥ |
| रत्नावली नाटिका सटीक | ॥। |
| मालविकाग्निमित्र सटीक | १॥ |
| धनञ्जय विजय सटीक | । |
| महावीरचरितनाटक | १॥ |
| साङ्ख्यतत्त्वकौमुदी सटीक | २ |
| वैयाकरणभूषणसार | ॥। |
| लीलावती | ॥। |
| वीजगणित | १ |
| शिशुपालवध सटीक (माघ) | ४ |
| किरातार्जुनीय सटीक | २॥ |
| कुमारसम्भव पूर्वखण्ड सटीक | ॥। |
| कुमारसम्भव उत्तरखण्ड | ॥ |
| ...अष्टकम् पाणिनीयम् | ॥। |
| ...६ वाचस्पत्यम् (संस्कृत वृहदभिधान ) | १२० |
| २७ कादम्बरी सटीक | ३ |
| २८ राजप्रशस्ति | ✓ |
| २९ अनुमानचिन्तामणि तथा अनुमानदीधिति | ३ |
| ३० सर्वदर्शनसंग्रह | १ |
| ३१ भामिनीविलास सटीक | १ |
| ३२ हितोपदेश सटीक | १ |
| ३३ भाषापरिच्छेद मुक्तावलीसहित | १ |
| ३४ बहुविवाहवाद | । |
| ३५ दशकुमारचरित सटीक | १॥ |
| ३६ परिभाषेन्दुशेखर | ॥। |
| ३७ कविकल्पद्रुम धातुपाठः | ॥ |
| ३८ चक्रदत्त (वैद्यक) | २॥ |
| ३९ उणादिसूत्र सटीक | २ |
| ४० मेदिनीकोष | १ |
| ४१ पञ्चतन्त्रम् ( श्रीविष्णुशर्मणा सङ्कलितम्) | २॥ |
| ४२ विद्वन्मोदतरङ्गिणी(चम्पूकाव्य) | ॥ |
| ४३ माधवचम्पू | ✓ |
| ४४ तर्कसंग्रह ( इंराजी अनुवाद सहित) | ॥ |
| ४५ प्रसन्नराघव नाटक (श्रीजयदेवकवि विरचित) | १ |
| ४६ विवेकचूडामणि ( श्रीमत् शङ्कराचार्य कृत) | ।✓ |
| ४७ काव्यसंग्रह (सम्पूर्ण) | ५ |
| ४८ लिङ्गानुशासन सटीक | । |
| ४९ ऋतुसंहार सटीक | ।✓ |
| ५० विक्रमोर्वशी (सटीक) | १॥ |
| ५१ वसन्ततिलक भाण | ।✓ |

सामवेदस्य

# दैवतब्राह्मणम् ।

तथा

# षड्विंशब्राह्मणम् ।

सायणाचार्य्यकृतभाष्यसहितम् ।



बि, ए, उपाधिधारिणा
श्रीजीवानन्द विद्यासागर-भट्टाचार्य्येण

संस्कृतं प्रकाशितञ्च ।

कलिकातानगरे

सरस्वती यन्त्रे मुद्रितम् ।

ई १८८१

# भाष्यकृतोभूमिका।

—०—

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम्॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥ २॥
तत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः।
आदिशत्सायणाचार्य्यं वेदार्थस्य प्रकाशने॥ ३॥
ये पूर्वोत्तरमीमांसे व्याख्यायातिसंग्रहात्।
कृपालुः सायणाचार्य्यो वेदार्थं वक्तुमुद्यतः॥ ४॥
व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता।
व्याख्याता ब्राह्मणानान्तु व्याख्यानं संप्रवर्त्तते॥ ५॥
अष्टौ हि ब्राह्मणा ग्रन्थाः प्रौढ़ं ब्राह्मणमादिमम्।
षड्विंशाख्यं द्वितीयं स्यात् ततः सामविधिर्भवेत्॥ ६॥
आर्षेयं देवताध्यायो भवेदुपनिषत्ततः।
संहितोपनिषद्वंशौ ग्रन्था अष्टावुदीरिताः॥ ७॥
तत्राद्या ब्राह्मणग्रन्थाश्चत्वारो व्याकृताः पुरा।
देवताध्यायसञ्ज्ञस्तु ग्रन्थो व्याक्रियतेऽधुना॥ ८॥
साम्नां निधनभेदेन देवताध्ययनाद्यम्।
ग्रन्थोऽपि नामतोऽन्वर्थो देवताध्याय उच्यते॥ ९॥
तत्राद्ये बहुधा साम्नां देवताः प्रीतिकीर्त्तिनाम्।
द्वितीये छन्दसां वर्णास्तेषामेव च देवताः॥ १०॥
तृतीये तन्निरुक्तिश्चेत्येवं खण्डार्थसंग्रहः॥ ११॥

# दैवतब्राह्मणम् ।

हरिः ओम् ।

तत्रादौ साम्नां निधनभेदेन दैवताभिधानाय ता एवानुक्रमते—

**१ । अग्निरिन्द्रः प्रजापतिः सोमोवरुणस्त्वष्टाङ्गिरसः पूषा सरस्वतीन्द्राग्नी ।**

एताः सामदेवताः इति शेषः

तत्रादावग्निदैवत्यानि सामान्याह—

**२ । इडानिधनानि पदनिधनानीकारणिधनानीत्याग्नेयानीति ।**

निधनं नाम पञ्चभक्तिकस्य सप्तभक्तिकस्य साम्नोऽन्त्यो भागः । सर्वत्र सामतश्चतुर्विधः स्वरोनिधन मिडावागिति । स एवान्तर्णिधनं वहिर्णिधनमिति द्वेधा । तत्र निधनादित्रितयव्यतिरिक्तस्य स्वर इति रूढ्या नामधेयम् । इडानिधनानीति—कालेयरौरवादीनि । वाह्याचरनैरपेक्षेण ऋगन्त्यपदान्येव यत्र निधनस्थानीयानि तानि पदनिधनानि यौधाजय संहितादीनि । ईकारनिधनानि वैराजादीनि । उक्तत्रिविधनिधनानि यानि सामानि तान्याग्नेयानि अग्निदेवताकानि ।

अथैन्द्रदैवत्यान्याह—

**३। सर्वाणि निधनवन्त्यैन्द्राण्यन्यान्यादिष्टेभ्यः।**

आदिष्टेभ्यः इडानिधनादुक्तेभ्यः वक्ष्यमाणेभ्यो व्यतिरिक्तानि यानि निधनवन्ति सन्ति तानि सर्वाण्यैन्द्राणीति जानीयात्।

अथ प्रजापतिदैवताकान्याह—

**४। सर्वाणि स्वराणि प्राजापत्यानि—**

स्वर्यमाणम् उक्तलक्षणं ऋगन्त्याक्षरं हाइ कारश्च स्वरनिधनं तद्वन्ति प्राजापत्यानीति।

साम स्वयमेवोदाहरति—

**५। यथा वामदेव्यम्।**

एतद्धाथिकारयुक्तस्योदाहरणम्।

अथ सोमदैवत्यान्याह—

**६। ऋक्सामानि सौमानि—**

यानि ऋगक्षराणि स्तोभादिरहितानि केवलतानमात्रयुक्तानि तान्येव ऋक्सामानि।

स्वयमेव तान्युदाहरति—

**७। यथौशनकावे।**

अथ वरुणदैवत्यान्याह—

**८। वाङ्निधनानि वारुणानि—**

वाङ्निधनवन्ति वाङ्निधनानि ।

उक्तलक्षणं साम उदाहरति—

**९ । यथा यज्ञायज्ञीयम् ।**

अथ त्वष्टृदेवत्यान्याह—

**१० । अक्षरानुस्वाराणि त्वाष्ट्राणि-**

अक्षरमनुस्वर्य्यते येषु तानि तथोक्तानि

तान्युदाहरति—

**११ । यथा वारावन्तीयञ्चाभिवर्त्तश्च ।**

अथाङ्गिरोदेवतानां लक्षणमाह—

**१२ । स्वःपृष्ठान्याङ्गिरसानि ।**

अभिसोमास आयव इत्यादिषु गातव्यानि स्वःपृष्ठानि आङ्गिरसानि ।

अथ पूषदेवत्यानां लक्षणमाह—

**१३ । स्वर्णिधनानि पौषाणि ।**

काशीतदैवोदासप्रभृतीनि स्वर्णिधनानि ।

अथ सरस्वतीदेवतान्याह—

**१४ । कयानश्चित्र आभुवदापवस्वसहस्रिणमिति वाङ्निधने सारस्वते ।**

यद्यपि वाङ्निधनानि वारुणानीति पूर्वमेवोक्तं तथाप्य नयोरुत्पन्ने एव वाङ्निधने सारस्वते, अतएव द्वयव्यतिरिक्तानां वारुणत्वादस्यापुनरुक्तिः ।

अथैन्द्राग्नलक्षणमाह–

**१५। य आनयत्परावत इत्यैन्द्राग्ने।**

य आनयदित्यत इ सामनी उत्पन्ने, ते इन्द्राग्नीदेवत्ये।

अथाग्नेयैन्द्रयोः सामनी आह—

**१६। सुतं रयिष्ठाः सहोरयिष्ठा इत्याग्नेयैन्द्रे।**

उपनोहरिभिः सुतमित्यस्यान्ते "सुतꣳरयिष्ठाः"-इत्येतद्गीयते, तथा "सहोरयिष्ठा"—इत्येतदपि। ते उभे आग्नेयैन्द्रे एव।

निधनभेदेन सर्वेषां साम्नां सामान्येनाग्न्यादीन्द्राग्निपर्य्यन्ताः दश देवताः द्रष्टव्याः। आग्नेयैन्द्रयोरनिर्देशेऽप्यैन्द्राग्नस्येव विपर्य्यासादनन्यत्वम्।

अथ प्रकारान्तरेण निधनवशात् क्रत्स्नसाम्नां देवताभिधानाय ता एवानुक्रमते—

**१७। वसवो रुद्रा आदित्या विश्वेदेवाः।**

यथाग्न्यादयः प्रत्येकं सामदेवताः वस्वादयोऽपि सङ्घातात्मकाः सर्वेषां साम्नां निधन चतुष्टयभेदेन देवताः।

अथ निर्देशक्रमेणैतासां सामानि विभज्य दर्शयति—

**१८। वसूनाꣳस्वराणि रुद्राणान्निधनवन्त्यादित्यानामैड़ानि विश्वेषां देवानां वाङ्निधनानि।**

स्वरनिधनादिभेदेन सामान्यभागानां चातुर्विध्यम्। स्वरादित्रितयव्यतिरिक्तस्य निधनमिति रूढ्या नामधेयमिति पूर्वमेवोक्तम्, एतेषां लक्षणानि च प्रदर्शितानि।

ननु साम्नां पूर्वमेवाग्न्यादिदेवताकत्वं व्यवस्थितम्। इतः पर मपि सर्वाण्याग्नेयादीनीत्यादिना वक्ष्यते च॥ किमर्थं वस्वादिदेवताकथनमिति तत्राह—

**१९। यथा भूयस्त्वेन प्रदेशावर्त्तन्त इत्यन्तराणि।**

भूयसोभावो भूयस्त्वम्—सर्वश इत्यर्थः। तदनतिक्रम्य प्रदेशाः साम्नां वस्वाद्युपदेशा वर्त्तन्ते, अत उक्ताग्नेयाद्यपेक्षया वस्वादिदेवतान्यभ्यन्तराणि; पृथक् पृथक् देवताभिधानात् पूर्वोक्तानां वाह्यत्वम्, इदानीं सङ्घशोभिधानादान्तरत्वम्॥

अथोक्तप्रकारेण देवताभिधानेऽपि निगूढतरं साम्नां देवतापरिज्ञान प्रकारमाह—

**२०। अथान्तरतराणि सर्वाण्याग्नेयानि सर्वाण्यैन्द्राणि सर्वाणि प्राजापत्यानि सामानीत्यन्तरतराणि।**

पूर्वन्तु साम्नां चतुर्द्धा विभागेन देवताचतुष्टयाभिधानमुक्तम् इह तु सर्वेषामपि साम्नामग्न्यादिदेवताकत्वकथनादन्तरतरत्वम्॥

अथोक्तप्रकारादपि लघुतरं देवतापरिज्ञान प्रकारमाह—

**२१। अथान्तरतमानि सर्वाणि ब्राह्माणि सामानीति सर्वान्तरतमानि।**

कृत्स्नसाम्नां ब्रह्मणएवादौ सृष्टेस्तत्तद्देवताव्याजेन तस्यैव प्रतिपाद्यत्वात्सर्वेषां ब्राह्मत्त्वम्।

अथ साम्नां देवतासम्बन्धविषये ज्ञातव्यं रहस्यमाह—

**२२। अथोपनिषद्।**

कैषोपनिषदिति दर्शयति—

**२३। ऋग्वै माता साम पिता प्रजापतिः स्वरः।**

ऋक् प्रसिद्धा। साम गीत्यात्मकम्। स्वरः क्रुष्टादिः॥

( १८ ) अस्त्वेवं, किं ततः? इत्यत आह—

**२४। तद्यान्यृक्त आख्यायन्ते मातृतस्तान्याख्यायन्ते अथ यानि सामत आख्यायन्ते पितृतस्तान्याख्यायन्ते अथ यानि स्वरत आख्यायन्ते प्रजापतितस्तान्याख्यायन्ते।**

ऋक्त आख्यातानि यज्ञायज्ञीय वारवन्तीय प्रभृतीनि। तेषामृगवयवभूतपदेनाख्यानात्। सामत आख्यातानि यौधाजयप्रभृतीनि। स्वरत आख्यातानि वामदेव्यादीनि। एवं

समस्तस्योद्गीथस्योद्गानकर्म्मणि ऋक् साम स्वरा इति त्रयो-ऽवयवास्ते पृथक् पृथक् मात्रादिसम्बन्धेन प्रसिद्धा भवन्ति ।

अथोद्गीथस्योक्तविधत्वं प्रशंसति—

**२५ । स वा एषा उद्गीथो बन्धुमान् बन्धुमत्यः ।**

बान्धवा मात्रादयं स्तद्वान् । न केवलं बन्धुमत्त्वं किन्तु तेषामन्तर्भूतश्च ।

उक्तार्थज्ञानं शंसति—

**२६ । बन्धुमान् बन्धुमत्यो भवति जानन्ति ह वा एनं पितृतश्च य एवं वेद ।**

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ-प्रकाशे देवताध्यायाख्ये पञ्चमे ब्राह्मणे

प्रथमः खण्डः ।

पूर्व्वखण्डे साम्नां बहुधा देवता उक्ताः ॥ अथ तदाश्रय-भूतानां छन्दसां देवता अभिधास्यति । इदानीं तेषां वर्णा-नभिधातुं प्रति जानीते—

**१ । अथातश्छन्दसां वर्णाः ।**

वक्ष्यन्ते इति शेषः ॥

अथ गायत्र्यादिभेदेन वर्णविशेषानाह—

**२ । शुक्ला गायत्र्यो रूपेण सारङ्गरूप-मुष्णिहां पिशङ्गं ककुभाऽरूपं कृष्णामानष्टुभं**

## ततः। रोहितं दृहतीनां तु नीलं पाङ्क्तं ततः पुनः सुवर्णं त्रिष्टुभां रूपं गौरं जागत मुच्यते।

सारङ्गः शबलः। शेषाः स्पष्टाः (१)। एतेषां अक्षरसङ्ख्या तु "अथ छन्दांसि गायत्र्युष्णिगित्युपक्रम्य चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि" अनुक्रमण्या मुक्तत्वात् चतुर्विंशत्यक्षरप्रभृति चत्वारि चत्वार्यक्षराधिका उष्णिगादिषु द्रष्टव्याः (२)॥

अथातिजगतीप्रभृतीनां वर्णानाह—

## ३। अतो यान्यन्यानि छन्दांसि श्यावं तेषां ततः पुनः। नकुलन्त्वेकपदानां द्विपदां बभ्रुरुच्यते सारङ्गशुक्लकृष्णारूपाण्यृग्यजुःसामब्राह्मणान्विताः।

अतो यान्यन्यानि गायत्र्यादिसप्तच्छन्दोभ्यो व्यतिरिक्तानि अतिजगतीप्रभृतीनि उत्कृतिपर्यन्तानि (३) तेषां श्यावं कपिशवर्णं विद्यात्। "अथेन्द्रो जुषस्वप्रवहेत्याद्येकपदानां नकुलं नकुलजातं वर्णं जानीयात्। द्विपदानामिमानुक मित्यादीनां बभ्रुवर्णम्। तथा यानि ऋग्यजुरादिब्राह्मणगतानि गायत्र्यादीनि तेषाञ्च क्रमेण सारङ्गादयो वर्णा द्रष्टव्याः।

अथ यज्ञसम्बन्धिनां गायत्र्याद्युपबन्धानां मन्त्राणां

देवता वक्ष्यामीति प्रतिजानीते—

**४। यत्ते यत्ते प्रयोक्तव्यास्तेषां दैवत उच्यते।**

अथानुक्तानां विराजां वर्णं दर्शयति—

**५। विराजः पृश्नयो विद्यात्।**

पिबासोममिन्द्रमन्दतुत्वे त्येवमादया विराजः, पृश्निवर्णा इति जानीयात्।

अथाग्नेर्गायत्र्यादिमन्त्रद्वयश्रवणं किमर्थमित्याशङ्क्य तत्तात्पर्यमाह—

**६। दैवतं तत उत्तरम्।**

तत उक्तात् उत्तरं वाक्यजातं देवताभिधानमित्यर्थः॥

अथाग्न्यादीनां गायत्र्यादिदेवतात्वसम्बन्धपरं मन्त्रद्वयम्। तत्र प्रथमं मन्त्रमुदाहरति—

**७। अग्नेर्गायत्र्यभवत्सयुग्वोष्णिहया सविता सम्बभूव अनुष्टुभा सोमा उक्थैर्महस्वान् बृहस्पतेर्बृहती वाचमाभवत्।**

अग्नेः सयुग्वा सहायभूता गायत्री अभवत्। प्रजापतेर्मुखात् देवतासु मध्ये अग्निरजायत। छन्दःसु मध्ये गायत्री च उभावप्य जायेतामित्यर्थः। तथाच तैत्तिरीयकं 'प्रजापतिरकामयत प्रजायेयेति। स मुखतस्त्रिवृतं निरमिमीत। तमग्निर्देवतान्वसृज्यत गायत्री छन्दः"-इति॥

यद्वा। सयुग्वेत्यत्तरत्र सम्बध्यते। अग्नेः सकाशा-ज्जायतो अजायत इत्यर्थः। तथा उष्णिहया उष्णिक्छ-न्दसा सह, सयुग्वा सह युज्यमाना ककुप् सविता देवः सम्बभूव तस्मात्प्रजापतेर्यज्ञे 'आपश्चापि हलन्तानामिति (१०) वचनादुष्णिहशब्दाद्दापप्रत्ययः। तथा उक्थैर्मन्त्रैः महस्वान् तेजस्वी सोमः अनुष्टुभा अनुष्टुप् छन्दसा सार्द्धं तस्मादेव प्रजापते रजायत। तथा बृहस्पतेर्वाचं वाक्यं बृहती छन्दः अभवत् अचरत् अगच्छद्वा। बृहत्या सार्द्धं बृहस्पतिरपि तस्मात्प्रजापतेर्यज्ञेऽजायतेत्यर्थः॥

अथ द्वितीयं मन्त्रमुदाहरति—

**८। विराण्मित्रावरुणयोरभिश्रीरिन्द्रस्य त्रिष्टुविह भागो अह्नः। विश्वान् देवाञ्जगत्या विवेश तेन चाक्लृप्रऋषयो मनुष्याः।**

अपि च मित्रावरुणयो र्देवयोर्विराट् छन्दः अभिश्रीः प्राप्ताश्रया आसीत्। अथ इन्द्रस्य त्रिष्टुप् छन्दः अह्नो भागो माध्यन्दिनसवनाख्यश्चाभूत्। तथा जगतीच्छन्दः विश्वान् देवान् आ विविश प्रविष्टा। तेन अग्न्यादिदेवताकेन गा-यत्र्यादिच्छन्द उपनिबद्धेन ऋषयो मनुष्या मरणशीला मानवाश्च चाक्लृप्ताः चक्लृपिरे क्लृप्ताः सृष्टा आसन्नित्यर्थः। अतो गायत्र्या अग्न्यादिदेवताकेन गायत्र्यादि छन्दः इत्युक्तं भवति॥

अथोपरितनानां छन्दसां देवतामाह—

**९ । प्राजापत्या अतिच्छन्दसो विच्छन्दसो वायुर्देवताः । पुरुषो द्विपदानां दैवतं ब्राह्म एकपदाः स्मृताः ।**

अतिच्छन्दसः अतिजगत्यतिशक्कर्यादयोऽतिपूर्वाः : विच्छन्दसः शक्कर्याष्टिधृतयः । यद्वा । सर्वा एता अतिच्छन्दसः । विच्छन्दसो गायत्र्यादय एवैकद्व्यक्षरन्यूनाधिकभूताः । ताश्च क्रमेण प्रजापतिवायुदेवताकाः द्विपदा एकपदाश्च वर्णाभिधानसमये दर्शिताःताश्च क्रमेण पुरुष-ब्रह्म-देवताकाः

अथ अनिर्दिष्टायाः पङ्क्तेर्देवतामाह—

**१० । वासवी पङ्क्तिः ।**

वासवी वसुदेवताका ॥

अथ छन्दसामुक्तदेवताकत्वे प्रमाणमुपन्यस्यति—

**११ । स तु न मन्येतैतद्दैवत्या एवैतेषु छन्दस्सृचो भवन्तीति छन्दसां तु हैतद्दैवतमिति ।**

तु शब्दः शङ्काव्यावृत्त्यर्थः : स पुरुषः न मन्येत, छन्दसामुक्तदेवताकत्वे प्रमाणं नास्तीति न शङ्केत । यथा एतेषु गायत्र्यादिच्छन्दःसु एतद्दैवत्या एव अग्न्यादिदेवताका एव ऋचः प्रायेण सम्भवन्ति तथा छन्दसां ( तु शब्दोऽप्यर्थे ) अग्न्यादिदेवताक ऋगाश्रयाणामपि छन्दसामेतद्दैवतं ह एता अग्न्यादिदेवता भवितुं युक्ताः खल्वित्यर्थः ।

इति श्रीदैवताध्यायाख्ये पञ्चमे ब्राह्मणे द्वितीयः खण्डः ॥

अथ सामाश्रयाणां छन्दसां कथनप्रसङ्गेन तेषा मेव निर्व्वचनं दिदर्शयिषु राद्दो प्रतिजानीते—

## १। अथातोनिर्वचनम्।

अथ साम्नां देवताभिधानानन्तरम्, अतः यतोनिर्व्वचनेन निरुक्तं गायत्र्यादि छन्दो गायत्रं साम जागतं सामेति सामनामसूपयुज्यते अतो निर्वचनं प्रकृति-प्रत्यय विभागेन व्युत्पादनं प्रदर्श्यत इति शेषः ॥

तत्र गायत्र्या दर्शयति—

## २। गायत्री गायतेः स्तुतिकर्मणः।

गै शब्दे ; शब्दः स्तवनं, गायति स्तौति प्रकाशयति देवतानिति गायत्री ॥

अथ ब्राह्मणप्रदर्शनेनैव प्रकारान्तरेण निर्वचनं दर्शयति—

## ३। गायतोमुखादुदपतदिति ह ब्राह्मणम्

गायतः वेदजातं शब्दयतः प्रजापतेर्मुखात् एषा वेदसारभूता उदपतत् उदगच्छद् ततः अतोपि गायत्रीत्यर्थः ॥ अत्रैव गायत्री-विद्यायां प्रकारान्तरेण निरुक्तो गायत्री शब्दः। गायन्तेव त्रायते पालयति च सा गायत्री, या वै खलु गायति च—'वृथा संसारे मा क्लिश्यत, तदुच्छित्तये मामेव भजध्वमिति' स्वयं शब्दयति च। तथा कुर्व्वाणं दुःखात्मकात् संसारात् त्रायते पालयति च सा गायत्रीति निरुच्यतइति शेषः ॥ 'तद्यद्गायत्‍ँस्तत्रेस्तस्माद्गायत्री नामेति"

हि बृहदारण्यकं तथाच स्मार्तनिर्वचनमपि। 'गातारं त्रायते यस्माद्गायत्री तेन सा स्मृतेति' ॥

अथोष्णिहो निर्वचनं बहुप्रकारं दर्शयति—

**४। उष्णिगुत्स्नानात् स्निह्यतेर्वा कान्तिकर्मणोऽपि वोष्णीषिणो वेत्यौपमिकम्।**

उत्पूर्वात् 'ष्णा शौचे (अ० प०)—इत्यस्मात् उष्णिक् शब्दः। तदेवाह—उत्स्नानात् उद्भूतस्नानवत्वादुष्णिग् वा। यद्वा। स्निह्यतेः 'ष्णिह प्रीतौ (दि० प०) इति धातुः ततः यत् प्रीत्यात्मकं तत् कान्तमपि भवतीति कृत्वा कान्ति कर्म्मत्वम्। स्निह्यते काम्यते इत्युष्णिगित्यर्थः—कान्तं ह्येतद्देवतानां छन्दः॥ अपि वोष्णीषी उष्णीषवत्येवेत्यौपमिकम्—उपमाप्रयुक्तमभिधानमपेच्योष्णिक् शब्दः तथा ह्येषा गायत्रीतश्चतुर्भि रक्षैर्वेष्टितेव वर्तते। चतुरक्षराधिक्यादुष्णिकप्रभेदस्य॥

अथ ककुभो निर्वचनमाह—

**५ ककुप् ककुद्रूपिणीत्यौपमिकम्।**

ककुप्शब्दोऽप्युपमाप्रधानः—यथा वृषभस्य मध्यप्रदेशः ककुत् सञ्ज्ञक उच्छ्रितो भवति। एवं मध्यमपादस्य जागतत्वात् चतुरक्षरं ककुत्स्थानीयमस्यास्तीति ककुप् दकारस्य पकारः। ककुदस्यावं स्थायां लोपः,—इत्यस्मादसमासेऽप्यकारलोपः।

ककुभशब्दस्य काकुभं दन्तधावनमित्यादौ अर्थान्तर-

अस्मात् स्वाभिमतमर्थमाह—

## ६ । ककुप् च कुब्जश्च कुजतेर्वोब्जतेर्वा ।

ककुप्कुब्जशब्दौ कुजतेरुब्जतेर्वोत्पन्नौ। कुज कौटिल्य-प्रतिष्टम्भविलेखनेषु। उब्ज आर्जवे—अत्र न्यग्भावार्थः। ततः कौटिल्यन्यग्भावार्थक-धातुद्वयार्थस्यात्र सम्भवात् ककुप शब्दः॥

अथानुष्टुभो निर्वचन माह—

## ७ । अनुष्टुबनुस्तोभनात् ।

स्तोभतिश्छन्दार्थः। गायत्रीतस्तत्समाचरणादस्य छन्दः॥

उक्तार्थे ब्राह्मणसम्मतिं दर्शयति—

## ८ । अन्वस्तौदिति हि ब्राह्मणम् ।

निरुक्ते प्रकारान्तरेण ब्राह्मणवाक्यमुदाहृतम्। "गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति च ब्राह्मणम्"—इति॥

अथ पिपीलिकामध्यायानिर्वचनं वक्तुं पिपीलिका-शब्दस्य निर्वचनमाह—

## ९ । पिपीलिका पेलतेर्गतिकर्मणः ।

न ह्यसौ क्षणमप्युदास्ते॥

इदानीं तच्छन्दोनिर्वचनं दर्शयति—

## १० । पिपीलिकामध्येत्यौपमिकम् ।

पिपीलिका नाम उभयतः स्थूलो मध्ये कृश उद्भिज्जः

प्राणिविशेषः तन्मध्यमिव मध्यं यस्याः सा तथोक्ता। मध्यमपदलोपी समासः। तस्यास्तनूमध्यत्वमनुक्रम्य "एकादशिनोः परः षट्कस्तनुशिरा, मध्ये चेत् पिपीलिकामध्येत्युक्तम्।

अथ बृहत्या निर्वचनमाह—

## ११। बृहती बृंहतेर्वृद्धिकर्मणः।

अस्या अनुष्टुभः सर्वपादेष्वेकैकाक्षरवर्द्धनात् प्रवृद्धत्वम्।

अथ विराजो निर्वचनं बहुप्रकारमाह—

## १२। विराड्विरमणाद्विराजनाद्वा।

विराट् शब्दः "रमु क्रीड़ायां"—"राजृ दीप्तौ"—"राध साध संसिद्धौ"—इति त्रिभ्यो धातुभ्योऽन्यतरेणापि निष्पाद्यते। धातुत्रयार्थस्य तस्मिन् सम्भवात्॥

अथ निर्वचनमाह—

## १३। पङ्क्तिः पञ्चिनी पञ्चपदा।

पञ्चसंख्यायोगात् पिङ्क्तिशब्दः, पञ्चत्वप्रदर्शनं पञ्चपदेति॥

अथ त्रिष्टभोनिर्वचनं दर्शयति—

## १४। त्रिष्टुप् स्तोभ इत्युत्तरपदा।

स्तोभ इति स्तुतिकर्मोत्तरपदं यस्याः सा त्रिष्टुप्, अस्त्युत्तरपदं पूर्वपदस्य—त्रिशब्दस्य।

किं प्रवृत्तिनिमित्तमिति स्वयमेव पृष्टोत्तरमपि ब्रूते—

## १५। का तु त्रिता स्यात्तीर्णतमं छन्दो भवति।

अस्य त्रिता त्रित्वं का स्यादिति प्रश्नः। अस्योत्तरम्—तीर्णतमं छन्दोभवतीति। पूर्वेभ्यो महत्त्वात् छन्दांश्च लकारो लुप्तः। तीर्णतमं तरतेर्वा पूर्वपदम्। उभयार्थोपपत्तिस्तरणात् स्तोभनाच्चेति त्रैष्टुभत्वम्।

त्रिष्टुच्छन्द-पूर्वपदंमित्याह—

**१६। त्रिष्टुब्वज्रस्तस्य स्तोभमित्येत्यौपमिकम्।**

उभयस्त्रिककोटित्वात् वज्रस्त्रिवृत्। तस्य स्तोभमिवेत्युपमाप्रधानोऽयं निर्देशः। "यत्त्रिवृत्तः स्तोभं त्रिष्टुभस्त्रिष्टुप्त्वमिति ब्राह्मणम्।

अथ जगतीच्छन्दं निर्वक्ति–

**१७। जगती गततमं छन्दो जलजगतिर्भवति क्षिप्र गतिर्जन्जमलाकुर्वन्नसृजतेति हि ब्राह्मणम्।**

अतिजगत्याद्यति छन्दसां निर्वक्तुमुपक्रमते—

**१८। अतिच्छन्दांश्छन्देरर्थे।**

छन्दसोऽर्थे ज्ञानेनैवातिच्छन्दसोऽपि ज्ञानं सुलभमिति भावः। तथाच जगतीमतिक्रम्याधिकवलवत्त्वेन या वर्त्तते सैवातिजगतीत्येवं फलितम्। अथेदानीं छन्दस एव निर्वचनं वक्ति—

**१९। छन्दांसि छन्दयतीति वा**

छन्दसंवरणे (चु० उ०)' छदयति वर्णानि। तथाच

नैरुक्तम्—छन्दांसि छदनात्" (दै० १, १) इति।

तत्र गायत्र्यादिषु यथानियम-चतुर्विंशत्याद्यक्षराभावे तासां नामान्तरता माह—

## २०। निचृन्निपूर्वस्य चृतेः।

एकाक्षरन्यूनासु गायत्र्यादिषु निचृदिति। चर्चयति सन्दीपयति ऋग्गतभावानिति चृत् छन्दः. निकृष्ट मेकाक्षरेण हीनं निचृत्। तथाच पिङ्गलः—"ऊनाधिकेनैकेन निचृद्भूरिजौ (३ ५९) इति।

तथा एकाक्षराधिक्ये सञ्ज्ञान्तरमाह।

## २१। भरणाद् भूरिज उच्यते।

एकाक्षरेण भरणाद् चतुर्विंशत्यात्मगायत्र्यादाविति शेषः। अथो सामसु गायत्रस्य प्रशस्ततया तद्देवतोपसंहारे स्तौति

## २२। अथातोगायत्रमाग्नेयं भक्त्या भवति देवानां वर्षीणां वा परमेष्ठिनो वा प्राजापत्यस्य साम।

अथेत्यानन्तर्यवचनः अत इत्यधिकारार्थः। आग्नेयम् अग्निदैवतम्, यद् गायत्रं नाम साम, तद्धि देवानां वा ऋषीणां वा परमेष्ठिनः प्राजापत्यस्य वा सर्वस्यैवेत्यर्थः भक्त्या' सम्भजनेन भवति भवेत्॥

गायत्र-साम्नः किं मूल मित्याह-

## २३। सावित्री गेयम्।

सावित्रि नामर्चि तत्सवितुर्वरेण्यमित्यत्रैव गेयम् प्रशस्तमिति तद्नु अन्यत्रापि गेयमूहत:

ननु गानग्रन्थेषु कथं तन्नोपलभ्यतइत्याह—

## २४ । यत्रागीतम् ।

यत्र सावित्रिनामर्चि गानग्रन्थादौ अगीतम्, तत्रैव गानम् प्रशस्तमित्यर्थ: ।

किन्तदिति स्वरूपं दर्शयति—

१ र र २ रर
## २५ । तत्सवितुर्वरेणियोम् । भार्गोदेवस्य

७र — १र र २
धीमा हौर । धियोयोन: प्र । चो १ ऽ २ १ ऽ

१ — १ २ १ १ १
२ ऊम् । आर दायो आ २ ३ ४ ५ ।

सावित्र्याख्यर्कस्वरूपस्तु उत्तरार्चिकस्य षष्ठप्रपाठकीयतृतीयार्द्धे स्थितस्य दशमसूक्तस्य प्रथमपाठतो ज्ञेय: । व्याख्यातश्चापि तत्रैवेति ॥

॥ इति तृतीय: खण्ड: ॥

॥ समाप्तञ्च दैवतं ब्राह्मणम् ॥

# षड्विंशब्राह्मणम् ।

ओं नमः सामवेदाय ।

ओं ब्रह्म च वा इदमग्रे सुब्रह्म चास्तां ततः सुब्रह्मो-दक्रामदथह देवा यज्ञेन ब्रह्म पर्यगृह्णताग्निर्वै ब्रह्मा सावा-दित्यः सुब्रह्म तद्देवा यज्ञस्य सन्धावन्वैच्छन्नेष वै यज्ञस्य सन्धिर्यत्त्वेव उत्करस्तस्मादुत्करे तिष्ठंत्सुब्रह्मण्यः सुब्रह्मण्या माह्वयति सुब्रह्मण्यो ३ऽसुब्रह्मण्यो३ऽ सुब्रह्मण्यो३ मिति स्त्रिय मिव विराह त्रिषत्या (त्या) हि देवा इन्द्रागच्छेति यदाहेन्द्रागच्छेत्येतद्वा अस्य प्रत्यक्षं नाम तेनैवैनं तदा ह्व-यति हरिव आगच्छेति पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी ताभ्याऽहीदऽसर्वं हरति मेधातिथेर्मेषेति मेधातिथिं ह काण्वायनऽमेषोभूत्वा जहार वृषणश्वस्य मेन इति वृष-णश्वस्य ह मेनस्य मेनका नाम दुहिता स ताऽ हेन्द्रश्चकमे गौरावस्कन्दिन्निति गौरमृगो ह स्म भूत्वावस्कद्यारण्या-द्राजानं पिबत्यहल्यायै जारेत्यहल्याया ह मैत्रेय्या जार आस कौशिकब्राह्मणेति कौशिको ह स्मैनां ब्राह्मण उप-न्येति गौतमब्रुवाणेति देवासुरा ह संयत्ता (त्ता) आसऽ स्तानन्तरेण गौतमः प्रश्राम तमिन्द्र उपेत्योवाचेह नो भवांत्स्य (च्छ) मश्चरत्विति नाहमुत्सह इत्यथाहं भवतो रूपेण चराणीति यथा मन्यस इति स यत्तद्गौतमो वा

ब्रुवाणश्चचार गोतमरूपेण वा तदेतदाह गौतमेतीत्य हे सुत्यामागच्छ मघवन्निति तद्यथार्हतो ब्रूयादित्यहे वः पत्तास्मि तदा गच्छातेत्येवमेवै तद्देवेभ्यः सुत्यां प्राह देवा ब्रह्माण इति देवाहैव देवा अथ हैते मनुष्यदेवा ये ब्राह्मणाः शुश्रुवाꣳसोनूचानास्ते मनुष्यदेवा आहुतय एव देवानां दक्षिणा मनुष्यदेवाना माहुतिभिर्ह देवान् प्रीणाति दक्षिणाभिर्मनुष्यदेवाञ्छुश्रुवषोनूचानान् ब्राह्मणान् प्रीणाति ॥१॥

इति षड्विंशब्राह्मणे प्रथम-प्रपाठके

प्रथमखण्डः ।

अथ यत्र सुब्रह्मण्यः सुब्रह्मण्यामाह्वयत्ये तस्मिन् ह काले ऽसुररक्षाꣳसि देवानां यज्ञमजिघाꣳसकस्ते देवा निह्नवमेवा कुर्वत ब्रह्मो३ꣳ सुब्रह्मो३मिति तानादित्यः पर्जन्य पुरो बलाको भूत्वाऽभि प्रैत्तान् वृष्ट्याऽग्न्या विद्युताहꣳस्तदाहुः स्त्री सुब्रह्मण्या ३ऽऽ पुमा ३ऽऽऽनपुꣳसका ३ऽऽऽमिति सर्वमेवेति ब्रूयात् यत्पर्ज्जन्यः पुरो बलाको भूत्वाऽभिप्रैत्तेन पुमान् यद्वृष्ट्या यदग्न्या तेन स्त्री यद्विद्युता तेन नपुꣳसकं तस्मात् सर्वमेवेति ब्रूयात्तदाहु ऋर्कसुब्रह्मण्या३ऽऽऽ यजूः ऽऽऽऽस्मामा३ऽऽऽ इति सर्वमेवेति ब्रूया दृच इवास्या नामधेयꣳसुब्रह्मण्येति तस्मा दृङ्मन्त्र एव खल्वयं निगदभूतो भवति तस्माद् यजुः सामकारिणः कुर्वन्ति यथान्यैः सामभिस्तस्मात् साम तस्मात् सर्वमेवेति ब्रूयात्तद्वा एतत् सुब्रह्मण्यामाहूय यजमानं वाचयति सासि सुब्रह्मण्ये तस्यास्ते पृथिवी पाद इत्याह यान्येव पृथिव्यामसुररक्षाꣳसि तान्येव तेनापहते सासि सुब्रह्मण्ये तस्यास्तेन्तरिक्षं

पाद इत्याह यान्येवान्तरिक्षेऽसुररक्षाꣳसि तान्येव तेनापहते सासि सुब्रह्मण्ये तस्यास्ते द्यौः पाद इत्याह यान्येव दिव्यसुररक्षाꣳसि तान्येव तेनापहते सासि सुब्रह्मण्ये तस्यास्ते दिशः पाद इत्याह यान्येव दिक्ष्वसुररक्षाꣳसि तान्येव तेनापहते परो रजास्ते पञ्चमः पाद इत्याह पराꣳरजसो वै ब्रह्मणः स्थान तदेतदाह सा न इषमूर्जं धुक्ष्वेत्याहेषमेवास्मा ऊर्जं दुग्धे वीर्य्यमन्नाद्यं धेहीत्याह वीर्यमेवास्मा अन्नाद्यं दधाति ब्रह्मश्रीर्वै नामैतन्नाम यत् सुब्रह्मण्या तस्मात् प्रातरनुवाक उपाकृते विसꣳस्थिते च यज्ञे सुब्रह्मण्यः सुब्रह्मण्यामाह्वयत्येष वै ब्रह्म सुब्रह्म चाप्नोति य एतद्गो युक्तं सुब्रह्मण्याय ददाति ब्रह्मणा चैवास्य श्रिया च यज्ञं समर्द्धयति य एवं वेदाथो खल्वाहुर्यच्चावगतं यच्चानवगतꣳसर्वस्यैव प्रायश्चित्तिरिति तस्मादेवं विदं सुब्रह्मण्यं कुर्वीत नानेवं विदम् ॥ २ ॥

इति षड्विंशब्राह्मणे प्रथम-प्रपाठके द्वितीयखण्डः ।

एकच्छन्दः प्रातः सवन तस्मादेकपात् पुरुषो हरत्यन्यं प्रत्यन्येन तिष्ठति त्रिच्छन्दा माध्यन्दिनः पवमानस्तस्मात् त्रयोऽधः प्राणा द्वे गायत्राꣳसामनी तस्माद्वयमधरेण प्राणेन करोति द्वे बृहत्यां तस्माद्वयमुत्तरेणैकं त्रिष्टुभिः साम तस्मादेकैव नाभिः प्राणानामिव तु विधृतिरथ यदेव तत ऊर्द्धं तानि पृष्ठानि बार्हतान्येकगायत्रीकाणि तस्माद्बृहत्य एव परिशवो बृहत्य एव कीकसाः पृष्ठमभिसमायन्त्यथ यदेव तत ऊर्द्धं स आर्भवः पवमानः

प्राणो गायत्री श्रोत्रे उष्णिक्ककुभौ वागनुष्टुप्चक्षुर्जगती पुष्टिर्यदन्यद्वै गायत्रयाᳬ सामनी तस्मादयं प्राणेन करोति प्राणिति चापानिति चैकं छन्दः ककुबुष्णिहौ द्वे सामनी तस्मात् समानᳬसच्छ्रोत्रं द्वे धेव शृणोति द्वे अनुष्टुभि सामनी तस्मादयं वाचा करोति सत्यं चानृतं च वदत्येकं जगत्यां साम तस्मा द्वे अक्षिणी सती समानं पश्यतो न हि पश्चादायन्तं पश्यत्यथ यदेव तत ऊर्ध्वं मूर्द्धा तद्यज्ञायज्ञीयं मूर्द्धा स्वानां भवति य एवं वेदाऽध इव वा अन्यान्यङ्गानुपरीव मूर्द्धाध इवास्मा अन्ये स्वा भवन्तुपरीव स्वानां भवति य एवं वेद यज्ञो वा अथ यज्ञ इत्याहुरेष वावजात एषोऽवलुप्तजरायुरेष आर्त्विजीनो य एतं वेदमनुब्रूते यदा वा एतं वेदमनुब्रूतेऽथैनᳬ शृणवन्त्यसावन्ववोचतेति तद्वै स जायत ऊनाक्षरा गायत्री प्रातः सवने प्रजानां प्रजात्या ऊनादिव हि प्रजाः प्रजायन्त ऊनाक्षरा गायत्री पृष्ठेषु वामदेव्ये यजमान लोक एव स मध्ये हि यज्ञस्य यजमान ऊनाक्षरा गायत्री संहिते प्राणापानयो रुचार ऊनादिव हि प्राणापानावुच्चरत ऊनाक्षरं यज्ञायज्ञीयं प्राणानामुतसृष्ट्यै यो हि पूर्णमुपधमेद् यदि प्रतीयाद् विपतेद् यदि न प्रतीयाद् विष्यन्देत तदाहुः सवनानाञ्च वा एत उदानाः प्राणानाञ्चोतसृष्टिरिति ॥ २ ॥

इति षड्विंशब्राह्मणे प्रथम प्रपाठके

तृतीयखण्डः ।

अध्वर्य्य वित्याहोद्गाता मास्म मे निवेद्य होत्रे प्रातरनुवाकमुपाकरो रिति सोऽध्वयुः प्राह स हुतो व्रजति स पू-

वेया द्वारा हविर्द्धाने प्रपद्यते स दक्षिणस्य हविर्द्धानस्योत्तरं चक्रमभ्यपश्रयमाण उदङ्ङासीनो विश्वरूपा गायति चत्रं वै स्तोत्रं विट्शस्त्रं चत्रेणैवास्मै विशमनुवीय्यमनुवर्त्मानं करोत्यथो स्तुतशस्त्रयो रेव समारम्भायाऽव्यवस्त्रंसाय सन्तत्या एतद्धस्माह ग्लावो मैत्रेयः प्राह्णे वा अद्याहं पापवसीयसं व्याकरिष्यामीति सह स्म सदस्येवोपवसथ्येऽहन्युदङ्ङासीनो विश्वरूपा गायति तदुपवादोस्त्यध्वर्यो किं स्तुतं स्तोत्रं होता प्रातरनुवाकेनान्वशंसीदिति स ब्रूयादकारिष महन्तद् यन्मम कर्म्म होतारं पृच्छतेति होतः ! किं स्तुतं स्तोत्रं प्रातरनुवाकेनान्वशंसीरिति स ब्रूयादकारिष महन्तद् यन्मम कर्मोद्गातारं पृच्छतेत्युद्गातः ! किं स्तुतं स्तोत्रं होता प्रातरनुवाकेनान्वशंसीरिति स ब्रूयादकारिष महन्तद् यन्मम कर्म्म गासिषं यद्गेयमिति तं चेद्ब्रूयुस्समा वै त्वमगासीर्न्ज्योति रिति स ब्रूया ज्योतिस्तेन येन ज्योति ज्योतिस्तेन येनर्ग् ज्योतिस्तेन येन गायत्री ज्योतिस्तेन येन छन्दो ज्योतिस्तेन येन साम ज्योतिस्तेन येन देवता ज्योतिरेवाहमगासिषं न तमो युष्मांस्तु पाप्मना तमसा विध्यानीत्याह पाप्मनैवैनांस्तत्तमसा विध्यति युञ्जे वाचं शतपदीमित्याह वाग्वावशतपदी ऋक् शतपदी शतसनिमेव तदात्मानञ्च यजमानञ्च करोति गाये सहस्रवर्त्तनीति साम वै सहस्रवर्त्तनि सहस्रसनिमेव तदात्मानञ्च यजमानञ्च करोति गायत्रं त्रैष्टुभं जगदिति गायत्रं वै प्रातःसवनं त्रैष्टुभं माध्यन्दिनं सवनं जागतं तृतीयसवनं सवनान्येवतद् यथा स्थानं यथा रूपं कल्पयति

विश्वारूपाणि सम्भृतेति विश्वमेव तद्वित्तमात्मने च यजमानाय च सम्भरति देवा श्रोकांसि चक्रिर इत्योकोहास्मिन् यज्ञः कुरुते य एवं वेदासि तम्हगाह स्मवै पुरा काश्यपा उद्गायन्त्यथह युवानमनूचानं कुसुरुबिन्दमौद्दालकिं ब्राह्मण उद्गीथाय वव्रे ते होचुः परि वै नोयमार्त्विज्यमादत्ते हन्तेममनुव्याहरामेति तं हानुव्याहरिष्यन्त उपनिषेदुः स होवाच ब्राह्मणा नमोवोस्तु प्राज्ञे वा अहं यज्ञं समस्थापयन्यथा तु वै ग्रामस्य यातस्य शीर्षं वा भग्नं वानुसमावहे देवं वा अहं यज्ञस्यातोऽधिकरिष्यामीति ते हङ्गि॰ क्लृत्योत्तस्थुः क इदमस्मा अवोचदिति ॥ ४ ॥

इति षड्विंशब्राह्मणे प्रथम प्रपाठके
चतुर्थखण्डः प्रथमाद्धश्च ।

इन्द्रो ह्वै विश्वामित्रायोक्थमुवाच वसिष्ठाय ब्रह्म वा गुक्थमित्येव विश्वामित्राय मनो ब्रह्म वसिष्ठाय तद्वा एतद्वासिष्ठं ब्रह्मापि हैवं विद्वं वा वासिष्ठं वा ब्रह्माणं कुर्व्वीत तद्यथो भयवर्त्तनिना रथेन यां यां दिशं प्रार्थयते तां तामभिप्राप्नोत्येव मेतेनोभयवर्त्तनिना यज्ञेन यं कामं कामयते तमभ्यश्नुतेऽथाईभार्ग्वे मनः प्राणानां स यद्व्याहरति वाचि तन्मनः प्रतिष्ठापयति तद्यथैकवर्त्तनिना रथेन न काञ्चन दिशं व्यश्नुते तादृगेतद् यावद् ऋचा यजुषा साम्ना कुर्युस्तावद् ब्रह्मा वाचं यमो बुभूषेत् प्रजापतिर्वा इमाँ स्त्रीन्वेदानसृजत त एनं सृष्टानाधिन्वँस्तानभ्यपीड़यत्तेभ्यो भूर्भुवः स्वरित्यक्षरद् भूरित्यृग्भ्यो क्षरत् सोऽयं लोकोभवद् भुवरिति यजुर्भ्यो क्षरत् सोऽन्तरि-

क्षलोको भवत् स्वरिति सामभ्योऽचरत् स्वः स्वर्गोलोको भवत्तद्यदृक्त उल्वणं क्रियेत गार्हपत्यं परेत्य भूः स्वाहेति जुहुया दृय वै लोको गार्हपत्योऽयं लोक ऋग्वेदस्तद्वा इमञ्च लोक मृग्वेदञ्च स्वेन रसेन समर्द्धयत्यथ यदि यजुष्ट उल्वणं क्रियेतान्वाहार्यपचनं परेत्य भुवः स्वाहेति जुहुया दन्तरिक्षलोको वा अन्वाहार्य-पचनोऽन्तरिक्षलोको यजुर्वेदस्तद्वा अन्तरिक्षलोकञ्च यजुर्वेदञ्च स्वेन रसेन समर्द्धयत्यथ यदि सामत उल्वणं क्रियेता हवनीयं परेत्य स्वः स्वाहेति जुहुयात् स्वर्गो वै लोक आहवनीयः स्वर्गो लोकः सामवेदस्तद्वै स्वर्गं च लोकꣳ सामवेदञ्च स्वेन रसेन समर्द्धयत्यतो वावयतमस्मिन्नेव कतमस्मिꣳ श्चोल्वणं क्रियेत सर्वेष्वेवानुपर्यायं जुहुयात्तथा हास्य यज्ञो स्कन्नः स्वर्गकृतो भवत्यधस्कन्ना ह्याभिन्नाद्वा त्रेधा यज्ञ उत्क्रामति देवान् दिवं तृतीयमन्तरिक्षं मनुष्याꣳस्तृतीयं पृथिवीं पितॄꣳस्तृतीयं तदभिमृशेद् देवान् दिवं यज्ञो गात्ततो मा द्रविणमष्टन्तरिक्षं मनुष्यान्यज्ञो गात्ततो मा द्रविणमष्टु पृथिवीं पितॄन् यज्ञो गात्ततो मा द्रविणमष्टु यत्र क्व च यज्ञो गात्ततो मा द्रविणमष्टिति तद्वा आत्मानञ्च यजमानञ्च स्वेन रसेन समर्द्धयति वरुणो वा एतद्विष्णो यज्ञमुपार्पयति यद् यज्ञ उल्वणं क्रियते तदप उपनिनयेद्ययोरोजसा स्कभिता रजाꣳसि वीर्येभि वीरतमा शविष्ठाया पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणापूर्वहूतौ स्वाहेति तद्वा आत्मानञ्च यजमानं च स्वेन रसेन समर्द्धयति ॥५॥

इति षड्विंशब्राह्मणे प्रथम-प्रपाठके पञ्चमखण्डः ।

ये विराजमतियजन्ते विराजमेव त ईप्सन्तोऽमुष्मिं ल्लोके श्राम्यन्त्यथ य एनामर्वाग्दभ्नुवन्ति विराजमेव त ईप्सन्तोऽमुष्मिंल्लोके श्राम्यन्ति तेषां तथा श्राम्यताꣳ सुकृतं चीयते न हि तदमुष्मिंल्लोके शक्नुवन्ति यदस्माल्लोका दकृत्वा प्रयन्त्येतद्ध स्माहोद्दालक आरुणिः कथन्ते यजेरन् कथं वा याजयेयुर्यं यज्ञस्य व्यृद्धेन न नन्दन्ति नन्दन्ति यत् समृद्धेनेत्यहं वा व काले यजे याहं काले याजयेयं योऽहं यज्ञस्य व्यृद्धेन नन्दामि नन्दामि यत्समृद्धेनेत्यपि ह स्मादेव कामाद् यज्ञस्य व्यर्द्धयति भूयसीरूपाप्ते रूपा ऽऽप्स्यामि भिषक्त्वेत्येतद्ध स्म वै तद्विद्वानाह यावद्वा ऋचा होता करोति होतृष्वेव तावद्यज्ञो यावद्यजुषाऽध्वर्युरध्वर्युष्वेव तावद् यावत्साम्नोद्गातोद्गातृष्वेव तावद् ब्रह्मण्येव तावद्यज्ञो यत्रोपरतास्तस्मात्तस्मिन्नन्तर्द्धौ ब्रह्मा वाचंयमो बुभूषेत् स यदि प्रमत्तो व्याहरेद्वेता वा व्याहृतीर्मनसानुद्रवेद्भूर्भुवःस्वरिति वैष्णवीं वर्चमिदं विष्णुर्विचक्रम इति राज्ञो ह मितस्य मर्कटोꣳ शूनादाय वृत्त मापुप्रुवे स हारुणि राहुतिमुद्यत्योवाच पुनर्वैनान्निवप्स्यतो वावमृतो वपप्सस इति स होवाच किꣳ होष्यसीति प्रायश्चित्तमिति किं प्रायश्चित्तमिति सर्वप्रायश्चित्तमिति किꣳ सर्वप्रायश्चित्तमिति महाव्याहृती रेव मघवन्निति सहोवाचोमारुणे यदाहुतिमनूचिषे कथं नु विद्वाञ्चकथमर्कटोꣳ शूनादत्तेति स होवाच यच्चावगतं यच्चानवगतꣳ सर्वस्येषैव प्रायश्चित्तिरिति तस्मा देतामेव जुहुयादपि वा ज्ञातं यदनाज्ञातं यज्ञस्य क्रियते मिथ्यर्न्ने तदस्य कल्पयत्वꣳ

हि वैश यथा यथं स्वाहेत्यपि वा प्राजापत्यां प्राजापते नत्वदेतान्यन्यो विश्वा जातानि परिता बभूव यत्कामास्ते जुहुमस्तन्नो अस्तुवयं स्याम पतयो रयीणां स्वाहेति तद्वा आत्मानं यजमानञ्च स्वेन रसेन समर्द्धयत्यथ यद्वै किं च यज्ञे कृष्णयं भिद्येत तदभिमृशेद्भूमिर्भूमिमगान्माता मातरमप्यगाद्भूयाम पुत्रैः पशुभिर्योस्मान् द्वेष्टि स भिद्यतामिति तद्वा आत्मानञ्च यजमानञ्च स्वेन रसेन समर्द्धयति ॥ ६ ॥

इति षड्विंशब्राह्मणे प्रथम प्रपाठके षष्ठखण्डः।

घ्नन्तीव वा एतत् सोमं राजानं प्रेवमीयते यदेनमभिषुण्वन्ति तस्यैतामनुस्तरणीं कुर्वन्ति यत्सौम्यं चरुन्तस्मात् पुरुषाय पुरुषायानुस्तरणी क्रियते साध्यानां वै देवानां सत्रमासीनानां शर्करा अक्षसु जज्ञिरे ते हेन्द्रः सुपनिषेदुः कथं नु तेषां शर्करा अक्षसु जायेरन् यां स्वं विद्या इति तेभ्य एतत्सौम्ये चरोश्च्यावमाज्यं प्रायच्छत्तदवेक्षन्त ते प्रापश्यन् प्रपश्यत्यनन्धो भवति य एवं विद्वांत्सौम्यं चरुमवेक्षते योऽलमन्नाद्याय सन्नथान्नाद्याद् दक्षिणार्द्धं सदसो गत्वे तं सौम्यातिशेषं प्राश्नीयाज्जनं वा एतस्मादन्नाद्यं क्रामति योऽलमन्नाद्याय सन्नयान्नमत्ति जनो अस्मात्पितरो जन्येनैवान्येनान्नमत्यन्नादो भवति ॥७॥

इति षड्विंशब्राह्मणे प्रथम-प्रपाठके सप्तमखण्डः।

## इति प्रथमः प्रपाठकः।

ओम्। प्रजापति रकामयत बहुः स्यां प्रजायेयेति स

एताꣳ रेतस्यामृचꣳ साम्ना प्रच्छन्नामगायद् यद्दचमसाम्नी मगास्य दस्यमाꣳ समजनिष्यत यत्सामामृचं माꣳस मनस्थिकमजनिष्यतच्चꣳसाम्ना प्रच्छन्नां गायति तस्मात् पुरुषः प्रच्छन्नो माꣳसेन त्वचा लोम्ना जायते त्रिरुद्गृह्णाति त्रय इमे लोका एषां लोकानामवरुध्यै त्रिभ्यश्च रेतः सिच्यते न हिं कुर्याद् वज्रो वै हिङ्कारो बलमिव रेतो यद्धिङ्कुर्याद् वज्रेण हिङ्कारेण रेतः सिक्तं विच्छिन्द्याद्रेतस्या छन्दसा प्राजापत्या देवतया सर्वमेतया ध्यायन् गायेत् सर्वꣳह्येदꣳरेतो द्वितीयां गायति तस्या द्वे अक्षरे सश्रयतो व्यतिषजति मध्यमस्य च पदस्योत्तममुत्तमस्य च प्रथमं व्यतिषक्तौ प्राणापानौ प्रजा दधतो गायत्रीच्छन्दसाऽऽग्नेयो देवतया पृथिवीमेतया ध्यायन् गायेत् तृतीयां गायति तां बलवदिवोरसेव गायति तस्या द्वे उत्तरार्द्धेऽक्षरे द्योतयति चक्षुरेव तद्युनक्ति तस्माद्युक्तं चक्षुस्त्रिष्टुप्छन्दसैन्द्री देवतयान्तरिक्षमेतया ध्यायन् गायेच्चतुर्थीं गायति तस्याश्चत्वारि चत्वार्यक्षराणि निक्रीडयन्निव गायत्या द्वादशभ्योऽक्षरेभ्यो द्वादशाक्षरपदा जगती पशवो वै जगती पशुष्वेव प्रति तिष्ठति तस्याश्चत्वार्युत्तमार्द्धेऽक्षराणि द्योतयति श्रोत्रमेव तद्युनक्ति तस्माद्युक्तꣳश्रोत्रꣳश्रोत्रे द्वे प्रति श्रवणे द्वे तस्मात् पुरुषः सर्वा दिशः शृणोत्यपि पराङ्सन् प्रत्यन्चꣳशृणोति जगतीच्छन्दसा सौरीदेवतया दिवमेतया-ध्यायन् गायेत् पञ्चमीं गायति तान्निनर्द्दन्निव गायत्याह बहुतमात् पुरुषादन्नमत्यन्नादो भवति य एवं वेद निरुक्तां चानिरुक्ताञ्च गायति निरुक्तेन वै वाचो भुञ्जते निरुक्त-

मस्या उपजीवन्ति भुङ्क्ते वाचमुपैनां जीवति य एवं वेदानुष्टुप्छन्दसा प्राजापत्या देवतया सर्वमेतया ध्यायन् गायेत् सर्वꣳह्येदं प्रजापत्यꣳषष्ठीं गायति तस्या द्वे द्वे अक्षरे उदासं गायत्या षड्भ्योऽक्षरेभ्यः षड्तव ऋतुष्वेव प्रति तिष्ठति पङ्क्ति छन्दसा सौमीदेवतया दिश एतया ध्यायन् गाये दिहैव च वा एष इहैव च मनसा गच्छति यो गायत्रे प्रातःसवने त्रिष्टुभङ्गायति जगतीं गायत्यनुष्टुभङ्गायति पङ्क्तिं गायत्यास्ते गायत्रं हे गायति प्राणमेव तदभ्येति प्राणो हि गायत्रं पन्थानमेव तदभ्येति पन्था हि गायत्रꣳरथन्तरवर्णामुत्तमां गायति यं वै रथन्तरमस्यामेव प्रति तिष्ठति॥ १॥

इति षड्विंशब्राह्मणे द्वितीय प्रपाठके प्रथमखण्डः।

ता वा एता देवलोकाय युज्यन्ते यत्पराच्यः प्रतीच्यो मनुष्यलोकायैष वाव जात एषो वत्स जरायुरेष आर्त्विजीनो यस्य धुरो गोयन्ते यश्चैवं विद्वान्धुरो गायति जातमेवैनमन्नाद्याय परि ददात्युभावन्नमत्त उद्गाता च यजमानश्च या प्रथमा तामन्नाद्यं ध्यायन् गायेद्रेतस एव तत्सिक्तायान्नाद्यं प्रतिदधाति न हिं कुर्याद्यद्धिङ्कुर्याद् वज्रेण हिङ्कारेण रेतः सिक्तं विच्छिन्द्याद्रेतस्याछन्दो युज्यते मनो धीयते या द्वितीया तां गायत्रीमागाङ्गायꣳस्तस्या द्वे अक्षरे समयनी व्यतिषजति मध्यमस्य च पदस्योत्तममुत्तमस्य च प्रथमं व्यतिषक्तौ प्राणापानौ प्रजा दधता गायत्रीच्छन्दो युज्यते प्राणापानौ धीयेते या तृतीया तां त्रिष्टुभभागां गायꣳस्तस्या द्वे उत्तमाद्देऽक्षरे

द्योतयति चक्षुरेव तद्युनक्ति तस्माद् विरूपञ्चक्षुः कृष्ण-
मन्यच्छुक्लमन्यत् त्रिष्टुप्छन्दो युज्यते चक्षुषी धीयेते या
चतुर्थी तां जगतीमागाङ्गायꣳस्तस्याश्चत्वार्युत्तमाक्षराणि
द्योतयति श्रोत्रमेव तद्युनक्ति तस्माद्युक्तꣳ श्रोत्रꣳ श्रोत्रे
द्वे प्रतिश्रवणे द्वे तस्मादपि पराङ्यन् प्रत्यङ् शृणोति
जगतीच्छन्दो युज्यते श्रोत्रे धीयेते या पञ्चमी तामनुष्टु-
भमागां गायꣳश्चतुर्धा व्यावृज्य गायेच्चतुर्धा वा इदं पुरुषो
वीर्याय विकृतो जायते वीर्यायैवैनत्तद्व्यावृज्य गायत्युच्चाव-
चामिव गायेदुच्चावचेव हि वाक् सङ्क्षुत्येव गायेत् स-
ङ्क्षुत्येव हि वाचं पुरुषो वदत्यनुष्टुप्छन्दो युज्यते वाग्
धीयते या षष्ठी तां पङ्क्तिमागाङ्गायꣳस्तस्या द्वे द्वे
अक्षरे उदासङ्गायत्याषड्भ्योऽक्षरेभ्यः षडृतव ऋतुष्वेव
प्रति तिष्ठति पङ्क्तिच्छन्दो युज्यते समानोदानौ धीयेते
सदिति प्रथमाया धुरो निधनꣳरेतसो ह्यधि सञ्जायते
समिति द्वितीयाया रेतसो ह्यधि सम्भवः स्वरिति तृती-
यायाः प्रस्वर्गं लोकं जानातीड़ेति चतुर्थ्याः पशवो वा इड़ा
पशुष्वेव प्रति तिष्ठति वागिति पञ्चम्याः सर्वा अस्मिन्
पुण्या वाचो वदन्ति य एवं वेद या प्रथमा ता माय-
च्छन्निव गाये दायत इव ह्यय मवाङ्प्राणो या द्वितीया
तां घोषिणीमिव गायेद् घोषीव ह्ययमपानो या तृतीया
तामुद्यच्छन्निव गाये दुद्युत इव ह्ययं प्राणो या चतुर्थी
तान्निक्रीड़यन्निव गायन्निक्रीड़ित इव ह्ययं व्यानो या पञ्चमी
तान्निरुक्तानि रुक्तामिव गायेन्निरुक्तानि रुक्त इव ह्ययꣳ
समानो या षष्ठी तामुदासमिव गाये दुदस्त इव ह्यय

मुद्गानो यच्छृङ्गं रथन्तरवर्णामुत्तमाङ्गाये दियं वै रथन्तर मस्यामेव प्रतितिष्ठति ॥ २ ॥

इति षड्विंशब्राह्मणे द्वितीय प्रपाठके द्वितीयखण्डः ।

देवाश्च वा असुराश्चैषु लोकेष्वस्पर्द्धन्त ते देवाः प्रजापति-मुपधावंस्तेभ्य एतान्धुरः प्राणान् प्रायच्छन्मनः प्रथममथ प्राणमथ चक्षुरथ श्रोत्रमथ वाचं ताभ्यः पञ्चभ्यो धूर्भ्यः पुरुषञ्च पशूंश्च निरमिमीत तेन पुरुषेणासुरानधूर्वन् यदधूर्वंस्तद्धुरां धूस्त्वं धूर्वति पाप्मानं भ्रातृव्यं य एवं वेद यो वै धुरां धूस्त्वं वेद धुरा धुरा भ्रातृव्याद्वसीयान् भवत्येतद्वै धुरां धूस्त्वं यं नाना वीर्य्या नाना रूपा नाना छन्दस्या नाना देवत्याः समानं हिंकार मभि सम्पद्यन्त एतद्वै धुरां धूस्त्वं धुर्वति पाप्मानं भ्रातृव्यं य एवं वेद यो वै धूर्षु महाव्रतं वेद सर्वा अस्मिन् पुण्या वाचो वदन्ति शिरो गायत्रमुरस्त्रिष्टुम्मध्यं जगती पादा वनुष्टुप्सर्वा अस्मिन् पुण्या वाचो वदन्ति य एवं वेद यो वा एवं धुरो विद्वानथासां व्रतं चरत्यागमिष्यतोऽस्य पूर्वेद्युः पुण्या कीर्त्ति रागच्छति सुरभिरेव गन्धो गायत्र्या व्रतं दर्शनीयं त्रिष्टुभः श्रवणीयं जगत्या यदेव वाचा पुण्यं वदति तदनुष्टुभ स्तदु सर्वासां व्रतं तदु विद्वांस माद्रु रति नो वादी रिति तदनादृत्य यस्य वै धुरो विगीतास्तस्य सङ्गीता यस्य वा एता बहिष्पवमाने विगीयान्तराज्येषु सङ्गायन्ति तस्य वै धुरो विगीता स्तस्य सङ्गीता यः कामयेतैकधा यजमानं यश ऋच्छेद्यथादिष्टं प्रजाः स्युरिति होतुराज्ये गाये देकधा यजमानं यश ऋच्छेद यथादिष्टं

प्रजाः स्युरिति होतुराज्ये गायेदेकधा यजमानं यश ऋ-च्छति यथादिष्टं प्रजा भवन्ति यः कामयेत कल्पेरन् प्रजा यथादिष्टं यजमानः स्यादिति यथाज्यं गायेत् कल्पन्ते प्रजा यथादिष्टं यजमानो भवति यो वा एवं धुरो वेदा नपजय्य मात्मने च यजमानाय च लोकं जयत्यति यजमान मात्मानं मृत्युं पराक् स्वर्गं लोकꣳ हरति ॥ ३ ॥

इति षड्विंशब्राह्मणे द्वितीय-प्रपाठके तृतीयखण्डः ।

प्राञ्चमग्निं मुन्नयन्ति तस्मात् प्राङासीनो होता न्वाह प्राङासीनो यजति प्राङासीनः शꣳसत्यसा वादित्यः प्राङ्-पांक्सञ्चरन्ति तस्मा दध्वर्युः प्राङ्पांक्सञ्चरन्त्यथैष चन्द्रमा दक्षिणे नैति तस्माद्ब्रह्माणं दक्षिणत आसयन्त्यथैतस्या-मुदिच्यान्दिशि भूयिष्ठं विद्योतते तस्मादेतां दिशमुद्गाता प्रत्युद्गायत्यथैष आकाशे मध्यतो भूतानाꣳ सन्न स्तस्मा-न्मध्ये सदस्य मासयन्त्युच्चावचा वा आप उतेव गाधा भ-वन्त्युतेव गम्भीरा स्तस्माद्धोत्रा शꣳसिन उतेव पञ्चर्चेन कुर्वन्त्युतेव भूयसा दितरस्यैव गतꣳरश्मयोनु यन्ति यस्मा-दध्वर्यो रेव गतं चमसाध्वर्यवो नुयन्ति ॥ ४ ॥

इति षड्विंशब्राह्मणे द्वितीय-प्रपाठके चतुर्थखण्डः ।

स प्रातः सवने सवनमुखीयेष्वाहूतेषूपहवमिच्छतेऽ-ग्निर्मे होता स मोपह्वयताꣳ होतरुपमाह्वयस्वेत्युच्चैरा-दित्यो मेऽध्वर्युः स मोपह्वयतामध्वर्यु उपमायह्वस्वेत्युच्चै-श्चन्द्रमा मे ब्रह्मा स मोपह्वयतां ब्रह्मन्नुपमाह्वयस्वेत्युच्चैः पर्जन्यो म उद्गाता स मोपह्वयता मुद्गात रुपमाह्वयस्वे-त्युच्चै राकाशो मे सदस्यः स मोपह्वयताꣳ सदस्यो पमा-

हयत्वेत्युच्चै रापो मे होत्राशꣳसिनस्ते मोपह्वयन्तां होत्राशꣳसिन उपमाह्वयध्वमित्युच्चै रश्मयो मे चमसाऽध्वर्यवस्ते मोपमाह्वन्तां चमसाध्वर्यव उपमाह्वयध्वमित्युच्चै स्तावा एता देवता ऋत्विजा मेव वाग्भि रुपह्वयन्ते स उपहूतो भक्षयति प्राणो यजमानोऽथो यवैतासां देवतानां लोक स्तदुपहूतो भवति ॥ ५ ॥

इति षड्विंशब्राह्मणे द्वितीय-प्रपाठके पञ्चमखण्डः ।

स माध्यन्दिने सवने सवनमुखीयेष्वाहृतेषूपहवमिच्छते वाङ्मे होता स मोपह्वयताꣳ होत रुपमाह्वयस्वेत्युच्चै श्चक्षुर्मेऽध्वर्युः स मोपह्वयतां ब्रह्मन्नुप माह्वयस्वेत्युच्चैः श्रोत्रं म उद्गाता स मोपह्वयतामुद्गातरुपमाह्वयस्वेत्युच्चै र्योऽयमन्तश्चक्षुयाकाशः स मे सदस्यः स मोपह्वयताꣳ सदस्योपमाह्वयस्वेत्युच्चै र्या इमा अन्तश्चक्षुषापस्ते मे होत्राशꣳसिन स्ते मोपह्वयताꣳ होत्राशꣳसिन उपमाह्वयध्व मित्युच्चै रङ्गानि मे चमसाऽध्वर्यव स्ते मोपह्वयन्तां चमसाध्वर्यव उपमाह्वयध्व मित्युच्चै स्ता वा एता देवता ऋत्विजा मेव वाग्भि रुपह्वयन्ते स उपहूतो भक्षयत्यपानो यजमानोऽथो यवैतासां देवतानां लोक स्तदुपहूतो भवति ॥ ६ ॥

इति षड्विंशब्राह्मणे द्वितीयप्रपाठके षष्ठखण्डः ।

स तृतीयसवने सवनमुखीयेष्वा हृतेषूपहव मिच्छते प्राणो मे होता स मोपह्वयताꣳ होत रुपमाह्वय स्वेत्युच्चै रपानो मेऽध्वर्युः स मोपह्वयता मध्वर्य उपमाह्वयस्वेत्युच्चै र्व्यानो मे ब्रह्मा स मोपह्वयतां ब्रह्मन्नुपमाह्वयस्वेत्युच्चैः

समानो म उद्गाता स मोपह्वयता मुद्गात रुपमाह्वयस्वेत्युच्चै र्योयमन्तः पुरुष आकाशः स मे सदस्यः स मोपह्वयताᳫं सदस्योपमाह्वयस्वेत्युच्चैर्या इमा अन्तः पुरुष आप स्ते मे होत्राशᳫंसिनस्ते मोपह्वयन्ताᳫं होत्राशᳫंसिन उपमाह्वयध्व मित्युच्चैर्लोमानि मे चमसाध्वर्यवस्ते मोपह्वयन्तां चमसाध्व र्यव उपमाह्वयध्वमित्युच्चैस्ता वा एता देवता ऋत्विजा मेव वाग्भि रुपह्वयन्ते स उपहूतो भक्षयत्युद्गानो यजमानोऽथो यत्रै तासां देवतानां लोकस्तदुपहूतो भवति सर्वेषां वषट्कर्त्ता चमसं भक्षये द्देवानां वा एतद्यज्ञस्य मुखं यदुद्गातृचमसं तस्मा दुद्गातृचमसं नान्यो भक्षयेदेवं विदुषो ह वै यज्ञो न व्यथत एवं विदुषो ह वै यजमानस्य स्वर्ग्यं पुत्रं पशव्य मिष्टं भवत्येवं विद्वान् ह वै यजमानो द्विषन्तं भ्रातृव्य मभिभवत्यथवा अतो यो यज्ञे हीनं कुर्यात् ॥ ७ ॥

इति षड्विंशब्राह्मणे द्वितीयप्रपाठके सप्तमखण्डः ।

यद्धोता जहाति वागष तद्यजमानं जहाति स यत्तत् करोति स्वां वाचं यजमाने दधाति स विष्वङ् वाचामुष्मिंल्लोके सम्भवति यदध्वर्युर्जहाति चक्षुर्ह तद्यजमानं जहाति स यत्तत् करोति स्वञ्चक्षुर्यजमाने दधाति स विष्वङ् चक्षुषामुष्मिंल्लोके सम्भवति यद्ब्रह्मा जहाति मनो ह तद्यजमानं जहाति स यत्तत् करोति स्वं मनो यजमाने दधाति स विष्वङ्मनसामुष्मिंल्लोके सम्भवति यदुद्गाता जहाति श्रोत्रᳫंह तद्यजमानं जहाति स यत्तत् करोति स्वᳫं श्रोत्रं यजमाने दधाति स विष्वङ् श्रोत्रेणामुष्मिंल्लोके सम्भवति

यत्सदस्यो जहात्यात्मा ह तद्यजमानं जहाति स यत्तत् करोति स्वमात्मानं यजमाने दधाति स विष्वङ्ङात्मनामुष्मिं ल्लोके सम्भवति यद्धोत्राशंसिनो जहत्यङ्गानि ह तद्यजमानं जहति ते यत्तत् कुर्वन्ति स्वान्यङ्गानि यजमाने दधति ते विष्वञ्चोऽङ्गैरमुष्मिं ल्लोके सम्भवन्ति यच्चमसाध्वर्यवो जहति लोमानि ह तद्यजमानं जहति ते ते यत्तत्कुर्वन्ति स्वानि लोमानि यजमाने दधाति ते विष्वञ्चो लोमभिरमुष्मिं ल्लोके सम्भवन्ति तस्मादेवं विद्वान् होत्रं न कुर्य्यादथवा अत ऋत्विजामेव विज्ञानं पशवो ह्याध्वर्युमनुकीर्त्तिर्होतारं योगक्षेमो ब्रह्माणमात्मा च प्रजा चोद्गातारम् ॥८॥

इति षड्विंशब्राह्मणे द्वितीय-प्रपाठके अष्टमखण्डः ।

स यदि पशुता व्याधीयेताऽध्वर्युर्मं इदम करिति विद्यादथ यद्येनं पापिका कीर्त्तिरनूदियाद्धोता म इद मकरिति विद्यादथ यद्यस्य योगक्षेमो व्यथेत ब्रह्मा म इद मकरिति विद्या दथ यद्यात्मना वा प्रजया वा व्याधीयेतोद्गाता म इद मकरिति विद्यात् प्राणदेवत्यो वै ब्रह्मा वाग्देवत्या इतर ऋत्विजः स यदि मन्येत ब्रह्मा म इद मकरिति हरितं हिरण्यं दर्भेनाद्या प्रवध्य स्रुच्य वधाय चतुर्गृहीत माज्यं गृहीत्वा जुहुयान्नमः प्राणाय वाचस्पतये स्वाहेति यद्यु वा इतरे नमो वाचे प्राणपत्न्यै स्वाहेति यद्दोतरो यदि वेतरे सर्व्वेष्वेवानुपर्य्यायं जुहुयान्नमः प्राणाय वाचस्पतये स्वाहा नमो वाचे प्राणपत्न्यै स्वाहेत्यथ तद्धिरण्यं ब्रह्मणे दद्या दथ यदाह यज्ञो वाव यज्ञस्य प्राय-

श्चित्तिरिति पुनर्यज्ञ एव स एते उ ह त्वेवाहुती यज्ञवि-भ्रष्टस्य प्रायश्चित्तिरिति ॥ ९ ॥

इति षड्विंशब्राह्मणे द्वितीय-प्रपाठके नवमखण्डः ।

ते वा ऋत्विजः स यजमानो देवा वा अन्ये ऋत्विजो मानुषा अन्ये यं देवा याजयन्ति देवलोकमेव स तै रवरुन्धेन मनुष्यलोक मथ यं मानुषा याजयन्ति मनुष्यलोकमेव स तै रवरुन्धेन देवलोक मथ य मुभये याजयन्ति देवलोकञ्चैव स तै रवरुन्धेन मनुष्यलोकं च स एतां देवानृत्विजो वृणीताग्निर्मेहोतादित्यो मेऽध्वर्युश्चन्द्रमा मे ब्रह्मा पर्जन्यो म उद्गाताऽऽकाशो मे सदस्य आपो मे होत्राशꣳसिनो रश्मयो मे चमसाध्वर्यवः स एतान् देवानृत्विजो वृत्वाथै-तान्मानुषान् वृणीत य एनमभि राधयेयु रथ चर्त्विजं देव-यजनं याचेत् स चेत्तस्मै दद्याद्देवयजनवान् भूया इत्येनं ब्रूयान्न चेत्तस्मै दद्याद् यदहं देवयजन वेद तस्मिꣳस्त्वा वृश्चानीत्येनं ब्रूया दग्निर्वाव तद्देवयजनं भूमिर्वाव तद्देवयजन मापो वाव तद्देवयजनꣳ श्रद्धा वाव तद्देव-यजन मेतेषु ह वा एनं देवयजनेष्वावृश्चत्यथो ह्यार्तिमेवा-पौरुषेयीं नेत्यथ तत एत्यर्त्विजो देवयजनं याचे दग्निर्मे-होता स मे देवयजनं ददातु होतर्देव यजनं मे देहीत्युच्चै रादित्यो मेध्वर्युः स मे देवयजनं ददात्वध्वर्यो देवयजनं मे देहीत्युच्चै श्चन्द्रमा मे ब्रह्मा स मे देवयजनं ददातु ब्रह्मन् देव-यजनं मे देहीत्युच्चैः पर्जन्यो म उद्गाता स मे देवयजनं ददातूद्गातर्देवयजनं मे देहीत्युच्चै राकाशो मे सदस्यः स मे देवयजनं ददातु सदस्य देवयजनं मे देहीत्युच्चै रापो मे

होत्राग्रंसिन स्ते मे देवयजनं ददातु होत्राग्रंसिनो देवयजनं मे दत्तेत्युचै रश्मयो मे चमसाध्वर्यव स्ते मे देवयजनं ददतु चमसाध्वर्यवो देवयजनं मे दत्तेत्युचै स्ता वा एता देवता ऋत्विजामेव वाग्भिर्देवयजनं ददाति स दत्ते यजते यदुन्नतं भूम्या अनूषरं यत्र बहुला ओषधयश्चा-त्वालसारिण्यो यत्रापः स्यु स्तस्य न पुरस्ताद्देवयजनमात्र मति शिष्याद्द यावांश्छस्या प्रासोवरपुरुषा ह्यास्मात्पा-पीयाग्ंसो भवन्ति यस्यैव मति रेचयन्ति कामं दक्षिणत आगामुकाहैनं दक्षिणा भवन्ति कामं पश्चादवरपुरुषा ह्यास्मांश्रेयाग्ंसो भवन्ति काममुत्तरत उत्तराहैनं देव-यज्योपनामुकाभवत्युत्तरोत्तरिणी ह्यस्य श्रीर्भवति यस्य पुरस्तात् त्रीणि ज्योतीग्ंषि दृश्येरन्नग्निराप आदित्य स्तद्दे-वयजनं तच्चिशुक्रियं पुरस्ताच्चित्रं देवयजनं पश्चाच्चित्रं श्म-शानकरणं प्रागुदक्प्रवण न्देवयजनं पश्चाद्दक्षिणाप्रवणं श्म-शानकरणं यथा वै दक्षिणः पाणिरेवं देवयजनं यथा सव्य स्तथा श्मशानकरणं यथा श्मशानकरणन्तथाभिचरणीयानां देवयजन मप्यु हैक आहुर्यस्मिन्नेव कस्मिग्ंश्च देशे श्रद्-धानो यजत ऋध्नोत्येवेति ॥ १० ॥

इति षड्विंशब्राह्मणे द्वितीय प्रपाठके दशमखण्डः ।

## इति द्वितीयः प्रपाठकः ।

---

यावान्यज्ञे रसो भवति तेनात एव प्राचीनं प्रचरन्त्यथै-तच्चा तयाम परिशिष्यत ऋजीषन्तन्नाह न तस्मै यद्दूषयेवा-

पाप्मेयुर्नौ तस्मै यदग्नावनु प्रहरेयुस्तेनाप एवाभ्यवयन्त्यापो
वै सर्वस्य शान्तिः प्रतिष्ठा पाप्मानꣳ हैष हन्ति यो यजते
तमिमं पाप्मानꣳहत मपोहराणीति तेनान्तरेण प्रतिपद्यन्ते
चात्वालश्चोत्करश्चैतद्वै देवानां तीर्थं तदेतदृषि राहाप्नान
न्तीर्थं क इह प्रवोचद्येन देवाः पथा प्रपिबन्ते सुतस्येत्येतद्वै
देवानां तीर्थमतीर्थꣳह्येव यज्ञस्याभ्योन्यत् तस्मादेतेनैव प्रसृते
प्रपद्येतैतेन निष्क्रामेत्तान् प्रच्युतान् देवयजनादप्राप्तान्
य एतस्मिन्नवकाशे रक्षाꣳस्य जिघाꣳसन्त एतदग्निरक्षोहा
सामापश्यत्तान्येतेनापाहत तान्यमुह्यपहतानि सन्तीति
देवा अकुर्वन्नित्येवैतद्रक्षाꣳस्यप सेधति तस्या हावोहाव
इति स्तोभांत्स्तोभत्यहावो स्वहावो स्त्वित्येवैतद्रक्षाꣳस्यप-
सेधत्यग्नि ष्टपति प्रतिदहतीत्याह रक्षाꣳस्येव तत्प्रतिदहति
पादाय पादायस्तोभा अनुवर्त्तन्ते रक्षसामपहत्यै विश्वꣳ
समत्रिणं दह विश्वꣳ समत्रिणं दहेत्यत्रिणो वै रक्षाꣳसि
पाप्मानोऽत्रिणोऽत्रिण एवैतद्रक्षाꣳसि पाप्मानमपसेधति
तस्य त्रिनिधनमाहुर्यं वै सुहतं घ्नन्ति न स पुनरुद्भुक्ते
यथाह पुनःपुनरादायꣳ सुहतꣳ हन्यात्तादृगेतत्तद्वा अति-
च्छन्दःसु भवति वारणमिव वा एतच्छन्दो यदतिच्छन्दा
वारणानीव रक्षाꣳस्यरण्यायतनानि तद्यथा स्व मरण्य-
मभयेनाति क्रामेत् तादृगेतत्तद्वै सप्तपदासु भवति सप्त वै
छन्दाꣳसि चतुरुत्तराणि तद्यथा सर्वैः छन्दोभिरभयेनाति-
क्रामेत्तादृगेतत्तस्य त्रिवचन एकविꣳशतिः पदानि त्रिः
सामाह तच्चतुर्विꣳशतिः चतुर्विꣳशतिरर्द्धमासाः संवत्सरः
साम तस्य वा एतस्य संवत्सरस्य साम्नो ऽहोरात्राणि

हिङ्कारोऽर्द्धमासाः प्रस्तावो मासा आदि ऋतव उद्गीथः पौर्णमास्यः प्रतिहारोऽष्टका उपद्रवो मावास्या निधनं तस्य वा एतत् संवत्सरस्य साम्नो वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनं तस्माद्धेमन्तं प्रजा निधनक्तता इवासते निधनरूपमिवैतर्हि तदाहुः कान्दिश मवभृथ मभ्यवेयुरिति प्राञ्चो भ्यवेयुर्देवानां वा एषा दिग्यत् प्राची या देवानां दिक्तान्नोनुयज्ञः सन्तिष्ठाता इति दक्षिणाभ्यवेयुः पाप्मानꣳहैष हन्ति यो यजते तमिमं पाप्मानꣳहतं दक्षिणाहराणीति पितॄणां वा एषा दिग्यद्दक्षिणा या पितॄणां दिक् तान्नोनुयज्ञः सन्तिष्ठाता इति प्रत्यञ्चो भ्यवेयुर्मनुष्याणां वा एषा दिग्यत् प्रतीची या मनुष्याणां दिक्तान्नोनुयज्ञः सन्तिष्ठाता इत्युदञ्चो भ्यवेयुर्नक्षत्राणां वा एषा दिग्यदुदीची या नक्षत्राणां दिक्तान्नोनुयज्ञः सन्तिष्ठाता इत्यतो वावयतमथैव कथमथा चापः स्युस्तदभ्यवेयुर्यद्वै विद्वान् कर्म्म करोत्यस्मादिदमिति वसीयानेव तेन भवति तदाहुः स्रवन्तीष्वभ्यवेयू३ स्थावरासू३ इति स्रवन्तीष्वभ्यवेयुः पाप्मानꣳ हैष हन्ति यो यजते तमिमं पाप्मानꣳहतमापः प्रवहतामिति स्थावरायाः शीपत्यास्तास्वभ्यवेयुरितो मा यज्ञो विक्षुब्धः प्रत्युपतिष्ठाता इत्यतो वावयतरथैकत रथा चापः स्युस्तदभ्यवेयुर्यद्वै विद्वान् कर्म्म करोत्यस्मादिदमिति वसीयानेव तेन भवति ॥ १ ॥

इति षड्विंशब्राह्मणे तृतीय-प्रपाठके प्रथमखण्डः ।

एकस्यै हिङ्करोति स प्रथमया तिसृभ्यो हिङ्करोति स मध्यमया पञ्चभ्यो हिङ्करोति स उत्तमयैकस्यै हिङ्करोति

स प्रथमया तिसृभ्यो हिङ्करोति स पराचीभिः पञ्चभ्यो हिङ्करोति स एकया स एकया स तिसृभि रिषु स्त्रिवृतो विष्टुतिरभिचरेत् स्तुवीतानीकं प्रथमिषुर्द्दनुजर्या यत्तिस्रः सन्दधाति श्येव पञ्चभिः सृजते स्तृणुते भ्रातृव्य वसीयाᳶ आत्मना भवति य एतया स्तुते ॥ २ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके द्वितीयखण्डः ।

तिसृभ्यो हिङ्करोति स पराचीभिः तिसृभ्यो हिङ्करोति स पराचीभिर्नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिरभिचरंत्स्तुवीत वज्रो वै त्रिवृद् वज्रस्त्रिणवो यत्त्रिवृत्त्रिणवाभ्यां पञ्चदशं विदधाति वज्रमेव तत्सम्यक् सन्दधाति एवमेव वै वज्रः साधुर्यदारम्भणतोऽणीयान् प्रहरणतः स्थवीयाᳶस्तेन पाप्मानं भ्रातृव्यᳶस्त्रिणुते वसीयाᳶ आत्मना भवति य एतया स्तुते ॥ ३ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके तृतीयखण्डः ।

एतयैवाभिचरंत्स्तुवीत वज्रो वै त्रिवृद् वज्रः पञ्चदशो वज्र स्त्रिणवो यत्त्रिवृत्पञ्चदश त्रिणवैः सप्तदशं विदधाति वज्रमेव तत्सम्यक् सन्दधात्येव मिव वै वज्रः साधुर्यदारम्भणतो णीयान् प्रहरणतः स्थवीयाᳶस्तेन पाप्मानं भ्रातृव्यᳶ त्रिणुते वसीयाᳶ आत्मना भवति य एतया स्तुते ॥ ४ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके चतुर्थखण्डः ।

तिसृभ्यो हिङ्करोति स पराचीभिर्नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिर्नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिरभिचरंत्स्तुवीत वज्रो वै त्रिवृद्वज्र स्त्रिणवो यत्त्रिवृत्त्रिणवाभ्यामेकविᳶशं विदधाति

वज्रमेव तत्सम्यक् सन्दधात्येवमेव वै वज्रः साधुर्यदारम्भणतो णीयान् प्रहरणतः स्थवीयांस्तेन पाप्मानं भ्रातृव्यं स्तृणुते वसीयां आत्मना भवति य एतया स्तुते ॥ ५ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके पञ्चमखण्डः ।

नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिर्नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिर्नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभि रभिचरंत्स्तुवीत वज्रो वै त्रिणवो वज्र मेव तत्पराञ्चं प्रवर्त्तयति स्तृत्यै तेन पाप्मानं भ्रातृव्यं स्तृणुते वसीयां आत्मना भवति य एतया स्तुते ॥ ६ ॥

इति षड्विंशब्राह्मणे तृतीय-प्रपाठके षष्ठखण्डः ।

स्वरान्तः प्रथम स्त्रिरात्रो गायत्री प्राणो वै गायत्री प्रजापतिः स्वः प्रजापति मेवाप्नोति निधनान्तो द्वितीय त्रिष्टुब्वीर्यं वै त्रिष्टुप् त्रिष्टुभः पुरुषः पुरुष मेवाप्नोतीडान्त स्तृतीयो जगती पशवो वा इडा पशवो जगती जागताः पशवः पशूने वाप्नोति प्रस्तुतच्छन्दाः प्रथम स्त्रिरात्र स्तेन सो यातयामायोत्तरस्य छन्दांसि व्यूहन्ति जगत्यः प्रतिपदो भवन्ति जगतीनां लोके त्रिष्टुभ स्त्रिष्टुभां गायत्रस्तेन सो यातयामायोत्तमास्य छन्दांसि व्येवो हन्ति त्रिष्टुभः प्रतिपदो भवन्ति त्रिष्टुभां लोके जगत्यो जगतीनां गायत्र स्तेनो एव सो यातयामानि वा एता अन्योन्यस्यै लोक मभ्यध्यायन् काम मेवैना गमयत्याप्नोति तं कामं यस्मै कामायैव आह्वयते तस्माद् युजौ न सट्टवहत स्तस्माद्विपरीतौ वहीयांसौ भवत स्तस्मा दुभयतो दन्तः स्यन्दन्ते

त्वचे वा अन्य ऋषयो विराज मपश्यन् वशिष्ठस्त्वतु ऋचेन तेन स चतु ऋचो यत्त्रिचेन्यत्साम भवत्येकर्च्चन्यद्यद्दाव चतस्त्र्वेकꣳसाम स एव चतु ऋचः साम भूयाꣳसं पोषं पुष्यति तमनु पोषं पोषुको भवत्येतद्ध स्माह मुञ्जः साम-श्रवस एतꣳह वै वयꣳसाम्नः पोषं विद्मेति तस्मादृय म-प्रतिगृह्णन्तो न सहस्रपोषाच्यवामह इति तदु ह स्माह वासिष्ठश्चैकितानेयः साम हैव नूनं भूयाꣳसं पोषं पुष्यति त मनु पोषं पोषुको भवति विधवाया इव त्वेवैतज्जन्म यदसाम्नो चतुर्थैवꣳ ह वा एते विदुरिति तस्मा देतेषां युवानः श्रोत्रियाः पुरायुषः प्रमायुका भवन्ति युवतयो जाया विधवा भवन्तीति यत् त्रिचेन्यत्साम भवत्येकर्चेन्य-द्यद्दाव चतस्त्र्वेकꣳसाम स एव चतु ऋच इति पशुरति-रिच्यते स ऐन्द्राग्न आलभ्य इन्द्राग्नी वै देवाना मोजिष्ठौ त उ अयातयामानौ तावेव तत्पुनक्ति स्वर्गस्य लोकस्य समष्ट्यै सौर्य्यं ब्रह्मवर्चसकाम आलभेतैतस्यां वा एकाद-शिन्या मादित्याः सूर्य्यमजनयंस्त तेजो ब्रह्मवर्चस मवारुन्ध तेजस्वी ब्रह्मवर्चसी भवति य एवं वेदाथो खल्वाहु राग्नेय एवालभ्य इत्यग्निर्वै सर्वा देवता स्तेन देवतानां काञ्चन-तरेति ॥ ७ ॥

इति षड्विंशब्राह्मणे तृतीय प्रपाठके सप्तमखण्डः ।

अथैष श्येन भिचरन् यजेत श्येनो वै वयसां चेपिष्ठो यथा श्येन आददीतैव मेवैन मेतेनादत्ते त्रिवृतः पवमाना भवन्ति त्रिवृद्वै स्तोमानां चेपिष्ठो यत् त्रिवृद्भवत्याशी यस्त्रि-णवा इति रथो हविर्द्धाने भवतो रथवज्र मेवास्मै तत् प्रव-

तैयति स्तुत्यै वषट्कारणिधनं भवत्येष वै वज्राणां मोजिष्ठो यत्साम वज्रय बहवो वषट्कुर्वन्ति तमेवास्मै वज्रं प्रहरति स्तृत्या उभे बृहद्रथन्तरे भवत उभाभ्यामेवास्मै बृहद्रथन्तराभ्यां वज्रं प्रहरति स्तुत्यै पराचीषु रथन्तरं भवति पराच मेवास्मै वज्रं प्रहरति स्तृत्यै तस्य रथन्तरं पृष्ठं बृहद्ब्रह्म सामैष वै साम वज्रस्तमेवास्मै वज्रं प्रहरति स्तृत्यै यं कामयेत जीयेतेति तस्य बृहत्पृष्ठं कुर्य्याद्रथन्तरं ब्रह्म साम चत्रं वै बृहत्पशवो रथन्तरं चत्रेणैवास्य पशून् हन्त्यपशुर्भवति जीयते यं कामयेत परामरावतमियान्न प्रतितिष्ठेदिति पवमाने रथन्तरं कुर्य्याद्बृहत् पृष्ठं प्लवं ब्रह्म साम बृहद्रथन्तराभ्या मेवैन मेभ्यो लोकेभ्य उद्वृत्य प्लवेन प्रप्लावयति परामरावतमेति न प्रतितिष्ठति वार्षाहरे पवमानमुखे भवतः सफौपगवे नानदं क्रूराणि सामानि सम्भरन्ति स्तृत्यै तैल्वको वा बाधको वा यूपस्य स्फ्यग्रः शवनभ्ये अधिषवणे अग्नये रुद्रवते लोहितः पशुः साद्यन्त्युपांश्वन्तर्यामो शरमयं बर्हिः श्रीत्यै वैभीदक इध्मो बिभित्यै लोहितोष्णीषा लोहित वाससो निवीता ऋत्विजः प्रचरन्ति स्तृत्यै नव नव दक्षिणा भवन्ति नवयन्त्येवैतं तत् ॥ ८ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके अष्टमखण्डः ।

त्रिवृदग्निष्टोमस्तस्येषु विष्टुतिं कृत्वाभिचरन्त्येतेषु वध्रो वै पुरायुषो हन्ति यदिषुं विष्टुतिं करोति पुरैवैन मायुषः प्रहन्ति त्रिवृद्वै स्तोमानां क्षेपिष्ठो यश्चित्रृन्नवत्याशी यश्चित्रवा इति वषट्कारणिधनं भवति सप्त ह भवत्या

सप्तमात् पुरुषा दनायतनो भवति यमेतेनाभिचरन्ति समानमितरच्छन्देन ॥ ९ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके नवमखण्डः ।

अथैष सन्दंशोऽभिचरन्यजेत यद्वै दुरादानं सन्दंशेन तदादत्ते यद् द्वौ द्वौ स्तोमौ स ह यथाह दुरादानं सन्दंशेनानुहाया ददीतैव मेवैन मेतेनादत्ते त्रिवृतं स्तोमं सम्पद्यते बृहतीं छन्दो वज्रो वै त्रिवृत्पशवो बृहती वज्रेणैवास्य पशूनि हन्त्यपशुर्भवति वैयश्वं भवति व्यश्वमेवैनं करोति परिष्टुब्भवति पर्येवैनं वृश्चति वार्षाहरे पवमानमुखे भवतः काशीतोपगवे नानदं साम क्रूराणि सामानि सम्भरन्ति स्तृत्यै निःसमदं यस्तेन क्रूरः समानमितरच्छन्देन ॥ १० ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके दशमखण्डः ।

अथैष वज्रोऽभिचरन् यजेत वज्रेणैवास्मै वज्रं प्रहरति स्तृत्यै सर्वः पञ्चदशो भवति वज्रो वै पञ्चदशस्तमेवास्मै वज्रं प्रहरति स्तृत्या उक्थ्यः षोडशिमान् भवति पशवो वा उक्थानि वज्रः षोडशी वज्रेणैवास्मै वज्रं प्रहरति स्तृत्यै तस्य महानाम्न्यः षोडशि साम भवति वज्रो वै महानाम्न्यो वज्रः षोडशी वज्रेणैवास्मै वज्रं प्रहरति स्तृत्यै समानमितरत्पूर्वेण ॥ ११ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके एकादशखण्डः ।

अतिरात्रश्चतुर्विंशं प्रायणीय महरभिजित्त्रयः स्वरसामानो दिवाकीर्त्य महस्त्रयः स्वरसामानो विश्वजिन्महाव्रत मतिरात्रस्तं विश्वेदेवाः सत्रमासत सोमेन राज्ञा गृह

पतिना तेबुर्वत्सोम एव नो राजा सर्वत्र विभवेदिति तस्मात्सोमो राजा सर्वाणि नक्षत्राख्युपैति सोमो हि रेतोधा नवाहपं संवत्सरस्य गर्भमुपयन्ति नवाहो वै संवत्सरस्य प्रतिमा नव प्राणाः प्राणानेवावरुन्धते प्रजावन्तो जीवा ज्योति रश्नुवते य एता उपयन्ति ॥ १२ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके द्वादशखण्डः ।

## इति तृतीयः प्रपाठकः ।

---

ओम् । प्रजापतिस्तपोऽतप्यत तस्य ह वै तप्यमानस्य मनः प्राजायत देवांत्सृजेयमिति तदिमे देवा असृजन्त दिवा देवानसृजत नक्तं मसुरान् यद्दिवा देवानसृजत तद्देवानां देवत्वं यदसूर्य्यं तदसुराणामसुरत्वं यत्पीतत्वं तत्पितृणां देवा वै स्वर्गकामास्तपोऽतप्यन्त तेषां तप्यमानानापं रसो-जायत पृथिव्यन्तरिक्षं द्यौरिति ते अभ्यतपपंस्तेषां तप्य-मानानापं रसोजायत ऋग्वेदः पृथिव्या यजुर्वेदोऽन्तरिक्षात् सामवेदोऽमुष्मात्ते अभ्यतपपंस्तेषां तप्यमानानापं रसो-जायत ऋग्वेदाद्गार्हपत्यो यजुर्वेदाद्दक्षिणाग्निः सामवेदा-दाहवनीय स्ते अभ्यतपपंस्तेषां तप्यमानानां पुरुषो जायत सहस्रशीर्षाः सहस्राक्षः सहस्रपात्ते देवाः प्रजापति मुप-ब्रुवन् वेदशरीरैर्वा इदममृतशरीरं न ह वा इदं कृत्योः समाप्नतेति ते ब्रुवन् को नामासीति स होवाच यज्ञो नामेति तेषां प्रजापतिः सद्यो यज्ञसंस्था मुपैति सद्यो ह वा एष यज्ञसपंस्था मुपैति यद्गार्हपत्यं प्रादुष्करोति सा

दीक्षणीया यद्दक्षिणाग्निं चाहवनीयञ्च सा प्रायणीया यत्समिधोऽभ्यादधाति ता उपसदोऽथ यस्याज्य मुत्पूतꣳ-स्कन्दति सा वै स्कन्नानामाहुतिस्ततो वै यजमानः प्रजायुर्भवति वरो देयः सैव तस्य प्रायश्चित्तिरथ यस्याज्य मनुत्-पूतꣳस्कन्दत्यसौ वाअस्कन्नानामाहुतिस्ततो वै यजमानस्य चित्तं प्रमायुर्भवति चित्रन्देयꣳ सैव तस्य प्रायश्चित्तिर्यद्गार्ह-पत्ये जुहोति तत्प्रातः सवनं यद्दक्षिणाग्नौ जुहोति तत्तृ-तीयसवनं यन्मार्जयते सोऽस्यावभृतो यद्दत्वा ददाति तेनो-दयनीयस्योदवसानीयस्य समाप्त्या अथ यस्याग्निर्मथ्यमानो न जायेतान्यमाहृत्यास्मिन्नवकाशे जुहुयाद्ब्राह्मणस्य वा हस्ते ऽजस्य वा कर्णे कुशस्तम्बे वाप्सु वा जुहुयादन्यैः शतहुतान् होमानेकः शिष्यहुतो वरं शिष्यैः शतहुतान् होमा नेकः पुत्रहुतो वरं पुत्रैः शतहुतान् होमानेको ह्यात्महुतो वयं स्वयं होता स्वयं दोहो स्वयमेवोपतिष्ठेताग्निहोत्रं होम्य-शेषं दक्षिणा सर्वैर्ह वा एतस्य यज्ञक्रतुभिरिष्टं भवति य एवं विद्वानग्निहोत्रं जुहोति ॥ १ ॥

इति षड्विंशब्राह्मणे चतुर्थप्रपाठके प्रथमखण्डः ।

प्रजापतिर्वा एतत्सत्रं सहस्रसꣳवत्सर मसृजत तेषां प्र-जापतिः सहस्रसꣳवत्सरं गवामयनेवारुन्धद्गवामयनं द्वाद-शाहे द्वादशाहमतिरात्रेऽतिरात्रꣳषोडशिनि षोडशिन मु-क्थ्य उक्थ्यमग्निष्टोमे ऽग्निष्टोममिष्टिपशुबन्धयोरिष्टिपशुब-न्धग्निहोत्रे सर्वैर्ह वा एतस्य यज्ञक्रतुभिरिष्टं भवति य एवं विद्वानग्निहोत्रं जुहोति ॥ २ ॥

इति षड्विंशब्राह्मणे चतुर्थप्रपाठके द्वितीयखण्डः ।

प्रजापति र्देवेभ्य औदुम्बरी मुच्छ्रयत्यसुषिरमूला मग्रन्थिं पृथुबुध्नौ मेकजां यजमानमात्रौदुम्बरी भवत्यथ कुब्ज वामना यजमाना ह्रस्वश्चोर्ध्व बाहवः प्रच्छेदनं कुर्युः कतिच्छदनौदुम्बरी भवति नवच्छन्दनाग्निष्टोमसाध्यः केष्वेकादश वैश्यस्तो मरतिरात्रपौण्डरीकेषु सप्तदश वाजपेयाप्तोर्यामो रेकविंशत्यश्व मेधेऽष्टाचत्वारिंशतं पुरुषमेधे परिमितं सर्वमेधे य एवं विद्वा नौदुम्बरी मुच्छ्रयत्विति तमेवाप्नोति प्रजापति रकामयता पचितिं करवाणि य एवं विद्वौदुम्बरी मुच्छ्रयत्यपचिति मेवाप्नोति ॥ २ ॥

इति षड्विंशब्राह्मणे चतुर्थप्रपाठके तृतीयखण्डः ।

यूपङ्करोति सचौरं स्थूलं मूले बालाग्र मनुरूपं वज्रो वै यूपो वज्रेणैवास्मै भ्रातृव्यं प्रहरत्यष्टाः श्रीः करोति दश दिशः परिगृह्णात्यभयतः पांक्तौ द्वे यूपे करोति पञ्चदश सप्तदशैक विंशति ररत्निं वा पालाशं पुष्टिकामस्य वैल्वं ब्रह्मवर्चस कामस्योदुम्बरमन्नाद्यकामस्य खादिरं बलकामस्य वैभीदक राजवृक्षो भ्रातृव्यवतः क्रमुकाश्वत्थपाषाणा यशस्कामस्य यत्किञ्च यज्ञियं पशुकामस्य तत्र वर्जनीया भवन्ति गड्डलो व्रणिलो व्यावृत्तः कुठिः कुब्जः शूलो दग्धः शुष्कः सुषिरो लुणदग्ध इत्यप्रशस्ता अथ प्रशस्ताः शुद्धावृत्ता अनुपूर्वसमाः प्रशस्ता यूपस्याश्चोदैवतान्यग्निः पूर्व्वायां यमो दक्षिणायां वरुणः पश्चिमायां सोम उत्तरायां या विदिशस्ता स्वादित्यरुद्रमरुद्वसवोपराजिताः पितरश्चाधरायां साध्याश्चोर्द्ध्वायो स्वर्देवत्योवै यूपो वै बहुरूपो वज्रोभूत्वा देवानुपतिष्ठते ते

देवाः प्रजापति मुपाधावन् यूपेन प्रहरन्त्या रोपयन्त्या योधयन्ति च तद् यूपस्य यूपत्वं मूल मरत्निं सत्वचं निखनेत्तस्य यन्नैषान्यान्तत्पितृणां यदूर्द्धं तन्मनुष्याणां यत्तदधरशनाया ओषधिवनस्पतीनां यदूर्ध्वं रशनाया स्तद्विश्वेषां देवाना माप्नावयन्त्यलं कुर्वन्त्यहतेन वसनेनाच्छादयन्तीति च तं गन्धर्वाप्सरसा मिन्द्रस्य चषालं यदूर्ध्वञ्चषालस्याङ्गुलमात्रं काष्ठं तत्साध्यानां देवानां प्राचीं सन्नमत्येतद्वै विष्णोः परमम्पदं तस्यर्तवः शरीरं शिरः संवत्सरो वेदा रूपाणि संवत्सर एव प्रतितिष्ठति य एवं वेद ॥ ४ ॥

इति षड्विंशब्राह्मणे पञ्चम-प्रपाठके चतुर्थखण्डः ।

ब्रह्मवादिनो वदन्ति कस्माद् ब्राह्मणः सायमासीनः सन्ध्या मुपास्ते कस्मात् प्रातस्तिष्ठन् काच सन्ध्या कश्च सन्ध्यायाः कालः किञ्च सन्ध्यायाः सन्ध्यात्वं देवाश्च वा असुराश्चास्पर्द्धन्ततेरसुरा आदित्यमभिद्रवंत्स आदित्योविभेत्तस्य हृदयं कूर्म्मरूपेणातिष्ठत् स प्रजापति मुपाधावत् तस्य प्रजापतिरेतद्भेषज मपश्यद्दतञ्च सत्यञ्च ब्रह्म चोङ्कारञ्च त्रिपदाञ्च गायत्रीं ब्रह्मणो मुखमपश्यत्तस्माद्ब्राह्मणोऽहोरात्रस्य संयोगे सन्ध्यामुपास्ते सज्योतिष्याज्योतिषो दर्शनात् सोस्याः कालः सा सन्ध्या तत् सन्ध्यायाः सन्ध्यात्वं यत्साय मासीनः सन्ध्यामुपास्ते तया वीरस्थानं जयत्यथ यदपः प्रयुङ्क्ते ता विप्रुषो वज्रीभवन्ति ता विप्रुषो वज्रीभूत्वाऽसुरानपाघ्नन्ति ततो देवा अभवन् परा सुरा भवत्यात्मना परास्य भ्रातृव्यो भवति य एवं वेद यत् सायञ्च प्रा-

तेश्च सन्ध्यामुपास्ते तया वीरस्थानं स्थानञ्च सन्ततमविच्छिन्नं भवति य एवं वेद ॥ ५ ॥

इति षड्विंशब्राह्मणे चतुर्थप्रपाठके पञ्चमखण्डः ।

अथैषा चन्द्रमसः क्षयवृद्धीभवति यदा वै चन्द्रमाः क्षीयते चाप्यायते च तदनुव्याख्यास्यामः पूर्वपक्षे वै देवा दीक्षन्ते तेऽपरपक्षे सोमं भक्षयन्ति तत्रेमानि त्रीणि पात्राण्युपधीयन्ते पृथिवी पात्रमन्तरीक्षं पात्रं द्यौः पात्रमिति तं देवा दिव्येन पात्रेणादित्याः प्रथमं पञ्चकलं पञ्चमीं भक्षयन्तो तेऽन्तरिक्षेण पात्रेण रुद्रा द्वितीयं पञ्चकलं दशमीं भक्षयन्ति ते पृथिव्या पात्रेण वसवस्तृतीयं पञ्चकलं पञ्चदशीं भक्षयन्ति षोड़शी कलावशिष्यते षोड़शकलो वै चन्द्रमाः स ओषधीश्च वनस्पतींश्च गाश्च पशूंश्चादित्यश्च ब्रह्म च ब्राह्मणांश्चानुप्रविशति तं देवा इन्द्रज्येष्ठाः सोमपाश्चासोमपाश्च यथा पितरं पितामहं प्रपितामहं वा वृद्धं प्रलयमुपगच्छमानं व्याधिगतं मरिष्यतीति वा तां रात्रिं वसन्ते तदमावास्याया अमवास्यात्वं तस्मादमावास्यायां नाध्येतव्यं भवत्यथ सम्भरणश्च तमोषधिभ्यश्च वनस्पतिभ्यश्च गोभ्यश्च पशुभ्यश्चादित्याच्च ब्रह्म च ब्राह्मणाः सन्नयन्ते तत्सान्नाय्यस्य सान्नाय्यत्वं चन्द्रमा वै धाता या पूर्वा पौर्णमासी सानुमति योत्तरा सा राका या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूर्योऽनुपश्यन्त्यन्यं न पश्यति तन्मिथुनमेवास्य भवति पुष्ये चानुमतिर्ज्ञेया सिनीवाली तु द्वापरे खार्वायां तु भवेद्राका कृतपर्वे कुहूर्भवेत् नूने चानुमतिं विद्याद्

यस्मिन् दृश्येत सा सिनीवाली राकायां तु सम्पूर्णश्चन्द्रस्तु कुहूर्न दृश्येत ॥ ६ ॥

इति षड्विंशब्राह्मणे चतुर्थप्रपाठके षष्ठखण्डः ।

स्वाहा वै कुतः सम्भूता कस्य दुहिता केन प्रकृता किं गोत्रा कत्यक्षरा कतिपदा कति मात्रा कति वर्णा कत्युच्छ्वासा किञ्चास्याः शरीरं कान्यङ्गानि कानि लोमानि कति शिराᳬसि कति वा चक्षूᳬषि किमस्याः आस्यं किं प्रावृता कौ बाहू कौ पादौ क्व च स्थिता किमधिष्ठाना कथञ्च स्वाहां प्रतिगृह्णासि ब्रूहि स्वाहाया रूपञ्च दैवतञ्च स्वाहा वै सत्यसम्भूता ब्रह्मणो दुहिता ब्रह्मप्रकृता लातव्यसगोत्रा त्रीण्यक्षराण्येकं पदं त्रयो वर्णाः शुक्लः पद्मः सुवर्ण इति चत्वारोऽस्यै वेदाः शरीरᳬषडङ्गान्यङ्गान्यौषधिवनस्पतयो लोमानि द्वे चास्याः शिरसी एकᳬशिरोऽमावास्या द्वितीयं पौर्णमासी चक्षुश्चन्द्रादित्या वाज्यभागौ हुतं दक्षिणा प्रावृता बृहद्रथन्तरमृग्यजुः सामगतिः सा स्वाहा सा स्वधा स वषट्कारः सैषा देवेषु वषट्कारभूता प्रयुज्यते पितृयज्ञे षु स्वधाभूता शकटी मुखी पृथिवीमन्तरिक्षेण विपर्येति तस्या अग्निर्दैवतं ब्राह्मणो रूपं यत्कामास्ते जुहुमस्तन्नो अस्तु वयᳬस्याम पतयोरयीणाᳬस्वाहेति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ ७ ॥

इति षड्विंशब्राह्मणे चतुर्थप्रपाठके सप्तमखण्डः ।

## इति चतुर्थ-प्रपाठकः ।

अथातोऽद्भुतानां कर्म्मणाᳫ्ं शान्तिं व्याख्यास्यामः पाला-शानां समिधा मष्टसहस्रं जुहुयादैन्द्रयाम्यवारुणधानादाग्नेय वायव्यसौम्यवैष्णव्ये त्वष्टाविन्द्रायेन्द्रोमरुत्वतेनाकेसुपर्ण-मुपयन्ततं घृतवतीभुवनानामभिश्रियाऽभित्यन्देवᳫ्ंसविता-रमोण्योरग्निन्दूतं वृणीमहे—वात आवातुभेषजᳫ्ं—सोमᳫ्ं राजानं वरुणमिदं विष्णुर्विचक्रम—इत्येतानि सामप्रभृत्यष्टशतं जपित्वा स्वस्ति वाचयित्वा स्वस्ति हैषां भवति स्वस्तिदाविशस्पतिः—स्वस्त्ययनं—तार्क्ष्यं—मरिष्टनेमिं—त्यमूषुवाजिनं देवजूत—मायुर्विश्वायुः—शतञ्जीवशरदोवर्द्धमान—इत्येतैः सम्भाराणामुपस्थानं कृत्वा स्वस्ति वाचयित्वा स्वस्ति हास्य भवति स्वस्ति हास्य भवति ॥ १ ॥

इति षड्विंशब्राह्मणे पञ्चम-प्रपाठके प्रथमखण्डः ।

देवाश्च वा असुराश्चैषु लोकेष्वस्पर्द्धन्त ते देवाः प्रजापतिमुपाधावᳫ्ंस्तेभ्य एतां दैवीं शान्तिं प्रायच्छत्ते ततः शान्त्यैका असुरानभ्यजयᳫ्ंस्ततो देवा अभवन् परा सुरा भवत्यात्मना परास्य भ्रातृव्यो भवति यएवं वेदाथ पूर्वाह्ण एव प्रातराहुतिं हुत्वा दर्भांश्छमीं वीरणां दधि सर्पिः सर्षपान् फलवतो मपा मार्गन्त शिरीष मित्येतान्याहरेदाहारयेद्वा स्नातः प्रयतः शुचिः शुचिवासाः स्थण्डिलमुपलिप्य प्रोक्ष्य लक्षणमुल्लिख्याद्भिरभ्युक्ष्याग्निमुपसमाधाय नित्यतन्त्रे णौदनकृसरयवागूरक्तपायसदधि क्षीरघृतपायसघृतमितिघृतोत्तराः पृथक् चरवः सर्वे सर्वेषां वा पायसः ॥ २ ॥

इति षड्विंशब्राह्मणे पञ्चम प्रपाठके द्वितीयखण्डः ।

## अथ द्वितीयखण्डः ।

सुब्रह्मण्याशब्दो देवतानामधेय मुत मन्त्रस्येति जिज्ञासाया मुभयोर्नामधेयम् इत्याख्यायिकां प्रतिपादयितुं प्रथमं देवतानामधेयत्वं दर्शयति ।

अथ यत्रेति अथ आख्यायिकोपक्रमलक्षणार्थः ॥ यत्र देवेषु यजमानेषु यस्मिन् काले सुब्रह्मण्य एतन्नामा ऋत्विक् सुब्रह्मण्या माह्वयति। तस्मिन्नाह्वानकाले देवानां सम्बन्धिनं यज्ञ मसुररक्षांसि च देवयोनयः क्रूरकर्माणः। अतएव घातकाः गन्धर्वाः पितरो देवा असुररक्षांसि इत्येके अजिघांसन् हन्तु मैच्छन् किल। ततः किमित्यत्राह। एवं सुब्रह्मण्यो मित्यर्थे च लोपः। अतःपरं किमिच्छत्याह तानादित्यइति। तैरेव माहूय आदित्यः आदित्यात्मक इन्द्रः पर्जन्यः वर्षासु मेघः सन् तत्रापि पुरोबलाकः सर्वेषां पुरोगामी मेघो भूत्वा तान्देवानभिप्रेत्तामभिमुखं प्रायच्छन् यज्ञ माश्रित्य तान् पविध्वंसकारिणी असुपानशन्या अहिंतया दृष्या विद्युता विद्योतनेन स्वप्रकाशनेनाहन् अहिंसीत। एतत्तु वक्ष्यमाणविचारत्वेनानभिहित मिति मन्तव्यम्। सुब्रह्मण्यायाः स्त्रीपुन्नपुंसकत्वं विमर्शपूर्वं व्युत्पादयितुं संशयं तावद्दर्शयति तदाहुरिति तत्र सुब्रह्मण्याया-देवता विषयत्वे सुब्रह्मण्याः किं स्त्रीनपुंसकात्मकत्वमेव। सुब्रह्मण्येत्युत्तरं ब्रूयात् कथमेकस्य स्त्रीनपुंसकात्मकत्वं तत्राह यत्पर्जन्येति ऋग्यजुः साम विचारार्थः प्लुत इति यथाह तर्हिं तत्सर्वं मेव। ऋग्यजुः सामानि सर्वाण्यति

स प्राचीं दिशमन्वावर्त्ततेऽथ यदास्य मणिमणिककुम्भस्थाली दरणमायासीराजकुलविवादो वा यानच्छत्रशय्यासनावसथ ध्वजपताकाग्रदैकदेशप्रभञ्जनेषु गजवाजिमुख्या वा प्रमीयाः प्रमीयन्त इत्येवमादीनि तान्येतानि सर्वाणीन्द्रदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्तीन्द्रायेन्द्रामरुत्वत इति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोतीन्द्राय स्वाहा शचीपतये स्वाहा वज्रपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहेति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ ३ ॥

इति षड्विंशब्राह्मणे पञ्चम-प्रपाठके तृतीयखण्डः ।

स दक्षिणां दिशमन्वावर्त्ततेऽथ यदास्य प्रजया पशुषु शरीरे वारिष्टानि प्रादुर्भवन्ति व्याधयो वा अनेकविधा अतिस्वप्न अस्वप्नमति भोजन मभोजन मालस्य व्रणमजीर्णनिद्राण्येवमादीनि तान्येतानि सर्वाणि यमदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति नाकेसुपर्णमिति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिरभि जुहोति यमाय स्वाहा प्रेताधिपतये स्वाहा दण्डपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहेति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥४॥

इति षड्विंशब्राह्मणे पञ्चम प्रपाठके चतुर्थखण्डः ।

स प्रतीचीं दिशमन्वावर्त्ततेऽथ यदास्य क्षेत्रगृहसंस्थेषु धान्येष्वीतयः प्रादुर्भवन्तीतयो वा अनेकविधा आखुपतङ्गपिपीलकमध्वकभौमकशुकसरभकसौक्ष्मक इत्येवमादीनि तान्येतानि सर्वाणि वरुणदेवत्यान्यद्भुतानि प्रायश्चित्तानि

भवन्ति घृतवतो इति स्थालीपाकं हुत्वा पञ्चभिराज्या हुतिभिरभि जुहोति वरुणाय स्वाहा अपाम्पतये स्वाहा पाशपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहेति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ ५ ॥

इति षड्विंशब्राह्मणे पञ्चम-प्रपाठके पञ्चमखण्डः ।

स उदीचीं दिशमन्वावर्त्ततेऽथ यदास्य कनकरजतव-रवस्त्रवज्रवैदूर्यविमुक्तामणिवियोगा भवन्त्यारम्भा वा विप-द्यन्तेऽथवा अन्यानि क्रूराणि मित्राणि वा विरज्यन्ते रिष्टानि वा वयांसि गृहमध्यासन्ते वाल्मीकभौमानि वा जहन्ते छत्राकं वोपजायते मधूनि वा निलीयन्त इत्ये-वमादीनि तान्येतानि सर्वाणि वैश्रवणदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्त्यभित्यं देवमिति स्थालिपाकं हुत्वा पञ्चभि राज्याहुतिभिरभिजुहोति वैश्रवणाय स्वाहा यक्षाधि-पतये स्वाहा हिरण्यपाणये स्वाहेश्वराय स्वाहा सर्वपा-पशमनाय स्वाहेति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ ६ ॥

इति षड्विंशब्राह्मणे पञ्चम प्रपाठके षष्ठखण्डः ।

स पृथिवीं मन्वावर्त्ततेऽथ यदास्य पृथिवी तटति स्फु-टति कूजति कम्पति ज्वलति रुदति धूमायत्यकस्मात् स-लिलमद्गिरति प्रवन्ति मज्जति निमग्नमुत्प्लवत्यकाले च पुष्पफलमभिनिवर्त्तते त्यश्वतरीगर्भोजायते यदा मज्जति हस्तिनो भूकम्पोजायते प्रासादं भिनत्ति यत्र तत्र राजा विनश्यति गौर्गेह मारोहेद्ग्राम दहिषोत्येवमादीनि स-र्वाण्यग्निदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्त्यग्निन्दूतं हणीमह इति स्थालीपाकं हुत्वा पञ्चभिराज्या हुतिभि-

रभिजुहोत्यग्नये स्वाहा हविष्पतये स्वाहार्चिष्पाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहेति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ ७ ॥

इति षड्विंशब्राह्मणे पञ्चम-प्रपाठके सप्तमखण्डः ।

सोऽन्तरिक्ष मन्वावर्त्ततेऽथ यदास्य विवातावातावायन्ते-ऽभ्रेषु चापरूपाणि दृश्यन्ते खरकरभमन्धकङ्कपोतोलुककाकगृध्र श्येनभासवायसगोमायुसꣳस्थान्यु परिपाꣳसुमाꣳसपेस्यस्थिरुधिरवर्षाणि प्रवर्त्तन्ते काकमिथुनानि दृश्यन्ते रात्रौ मणिधनु पश्येच्छशका ग्रामं प्रविशन्ति वृक्षाः स्रवन्ति रुधिराण्याकाशे राजकुलं वसन्तोत्येवमादीनि तान्येतानि सर्वाणि वायुदेव त्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति वात आवातुभेषजमिति स्थालीपाकꣳ हुत्वा पञ्चभिराज्याहुतिभिरभि जुहोति वायवे स्वाहा महद्भूताधिपतये स्वाहा शीघ्रपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहेति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ ८ ॥

इति षड्विंशब्राह्मणे पञ्चम-प्रपाठके अष्टमखण्डः ।

स दिव मन्वावर्त्ततेऽथ यदास्य तारावर्षाणि चोल्काः पतन्ति निपतन्ति धूमायन्ति दिशो दह्यन्ति केतवश्चोत्तिष्ठन्ति गवाꣳ शृङ्गेषु धूमो जायते गवास्तनेषु रुधिरꣳ स्रवत्यर्थं हिमा निपततीत्येवमादीनि तान्येतानि सर्वाणि सोमदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति सोमꣳ राजानं वरुणमिति स्थालीपाकꣳ हुत्वा पञ्चभिराज्याहुतिभिरभि जुहोति सोमाय स्वाहा नक्षत्राधिपतये स्वाहा

शीतपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहेति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ ९ ॥

इति षड्विंशब्राह्मणे पञ्चम-प्रपाठके नवमखण्डः ।

स परं दिव मन्वावर्त्ततेऽथ यदास्यायुक्तानि यानानि प्रवर्त्तन्ते देवतायतनानि कम्पन्ते दैवतप्रतिमा हसन्ति रुदन्ति नृत्यन्ति स्फुटन्ति खिद्यन्त्युन्मीलन्ति निमीलन्ति प्रतिप्रयान्ति नद्यः, कबन्धमादित्ये दृश्यते विजले च परिविष्यते केतुपता कच्छत्रवस्त्रविषाणानि प्रज्वलन्त्यश्वानां च बालधीष्वङ्गाराः चरन्त्यहतानि मर्माणि कनिक्रदन्त इत्येवमादीनि तान्येतानि सर्वाणि विष्णुदेवताङ्गतानि प्रायश्चित्तानि भवन्तीदं विष्णुर्विचक्रम इति स्थालीपाकं हुत्वा पञ्चभिराहुतिभिरभि जुहोति विष्णवे स्वाहा सर्वभूताधिपतये स्वाहा चक्रपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहेति व्याहृतिभिर्हुत्वाथ साम गायेत् खननाद्दहनादभिमर्शनाल्लोभिराक्रमणाच्चतुर्भिः शुध्यते भूमिः पञ्चमाच्चोलेपनात् सम्भारान् प्रदक्षिण मानीय ब्राह्मणात् स्वस्ति वाच्यैतैः सम्भारैर्यदुपसृष्टं तदभ्युक्षेच्छाम्यति ह्यातो ब्राह्मणभोजनं हिरण्यं गौर्वासोऽश्वो भूमिर्दक्षिणा इति शाम्यति ह्यतः शान्त्यर्थः शान्त्यर्थः ॥ १० ॥

इति षड्विंशब्राह्मणे पञ्चम-प्रपाठके दशमखण्डः ।

सोऽधस्ताद्दिश मन्वावर्त्ततेथ यदास्य गवां मानुषस्त्रिय जाश्वोष्ट्राः प्रसूयन्ते हीनाङ्गान्यतिरिक्तानि विकृतरूपाणि वा जायन्ते असम्भवानि सम्भवन्त्यचलानि चलन्तीत्येवमादीनि तान्येतानि सर्वाणि रुद्रदेवत्यान्यङ्ग तानि

प्रायश्चित्तानि भवन्त्यावीराजानमिति स्थालीपाकꣳ हुत्वा पञ्चभिराज्यहुतिभिरभिजुहोति रुद्राय स्वाहा पशुपतये स्वाहा शूलपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ ११ ॥

इति षड्विंशब्राह्मणे पञ्चम प्रपाठके एकादशखण्डः ।

स सर्वान्दिश मन्वावर्त्ततेथ यदास्या मानुषाणा मति छति मतिदुःखं वा पर्वताः स्फुटन्ति निपतन्त्याकाशाङ्गुमिः कम्पते महाद्रुमा उन्मलन्त्याश्मानः प्लवन्ति तटाकानि प्रज्व-लन्ति चतुःपाद पञ्चपादं भवतीत्येवमादीनि तान्येतानि सर्वाणि सूर्य्यदेवतान्यद्भुतानि प्रायश्चित्तानि भवन्त्युदुत्यं जातवेदसमिति स्थालीपाकꣳ हुत्वा पञ्चभिराज्याहुति-रभि जुहोति सूर्य्याय स्वाहा सर्वग्रहाधिपतये स्वाहा किरणपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहेति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ १२ ॥

इति षड्विंशब्राह्मणे पञ्चम-प्रपाठके द्वादशखण्डः ।

## इति पञ्चम-प्रपाठकः ।

---

समाप्तमिदं षड्विंशब्राह्मणम् ।

# अथ षड्विंशब्राह्मण भाष्यम् ।

## प्रथमप्रपाठकः ।

### प्रथम खण्डः ।

ॐ नमः सामवेदाय । हरिः ओम् ।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे
यं नत्वा कृतकृत्याः स्युः तं नमामि गजाननम् ॥ १ ॥
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः ।
आदिशत्सायणाचार्य्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुः सायणार्य्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥
व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता ।
व्याख्याता ब्राह्मणं चाद्यं प्रौढमाख्यातमादरात्
अथ द्वितीयं षड्विंशब्राह्मणं व्याचिकीर्षति ॥ ५ ॥

अस्मिन् ताण्डिशेषब्राह्मणे पूर्वाण्युक्तानि कर्म्माणि उक्तानामपि ये भेदास्ते च पठ्यन्ते ।

तत्र प्रथमं सुब्रह्मण्योच्यते । तच्च सवनत्रयेऽपि ज्ञेयम् ॥ ततो ब्रह्मकर्त्तव्यम् । ततो व्याहृतिहोमादिनैमित्तिकं

प्रायश्चित्तम् ॥ ततः सौम्यचरुविधिः । ततो बहिष्पवमान-धर्माः । ततः किञ्चित् प्रकीर्णकम् । ततो होत्राद्युपहवः । तत आर्त्विज्येषु ऋत्विगादिविधानम् । ततो नैमित्तिका होमाः । ततो अध्वर्युप्रशंसा । ततो देवयजने विज्ञेयं कर्म्म । ततोऽवभृथः । ततः अभिचारसंज्ञका विहृतयः । ततो द्वादशाहस्तुतिः । अथ श्येनादि विधिः । ततो वैश्वदेवं सत्रम् । इत्येवं प्रतिपाद्यमानार्थानामनुक्रमणिका ॥

तत्र प्रथमं तदुत्करे तिष्ठन्सुब्रह्मण्यः सुब्रह्मण्या माह्वयतीति विवक्षयेद माम्नायते । अग्रे ह्रस्वादौ निरुपपदस्याग्रशब्दवदर्थत्वात् । इदं वक्ष्यमाणं सुब्रह्म एते हे सुब्रह्म-सुब्रह्मणी ते हे एवास्ताम् अभूताम् ॥

ततः किमित्यतआह—ततः अनन्तरं सुब्रह्म देवेभ्यः सकाशा दुदक्रामन् उदगच्छन् ततोऽपि किमित्यत आह—

अथ ह सुब्रह्मणि देवेभ्य उत्क्रान्ते सति अनन्तरमेव स यदा व्युत्क्रमिषुः ब्रह्मदेवा वस्वादयो यज्ञेन पर्यगृह्णत परिगृहीतवन्तः । अत्र किं ब्रह्मशब्देनोच्यते किञ्च सुब्रह्मशब्देनेति । अग्नि र्वै ब्रह्मशब्दवाच्यः मुख्यत्वात् । अग्निमुखा वै देवा इति श्रुतेः। असौ चिदात्मने क आदित्यः सुब्रह्म च एतन्मन्त्रः । तथा चेन्द्रं प्रकृत्य स्तूयते असावादित्य इति । मन्त्रान्तरमपि । यदद्यमद्य वृत्रहन्नुदगा अभि सूर्य्य । सर्वं तदिन्द्र ते वशइति इन्द्रस्य च सुब्रह्मत्वम् सर्वं देवाधिपत्यात्कृते देवाः किमकारिषुरित्यत्राह । तदुक्ता तं सुब्रह्मदेवा यज्ञसम्बन्धी सन्धातरि वक्ष्यमाण उत्करदेशे अन्वैच्छन् अन्वेषण मकाषुः कामो यज्ञस्य सन्धिस्तत्राह ।

अयमेव यज्ञस्य सन्धिः सङ्गाता यत्र यस्मिन् देशे सोम मुहृत्य कीर्त्तयन्ते पांशवोऽस्मिन्निति उत्करः वेदेरुत्तरपूर्व- भागः । प्रकृते किमायात मित्यत आह—यज्ञस्य सन्धि- रुत्करः । तस्मात्तत्रोत्करे देशे तिष्ठंत्सुब्रह्मण्यो नाम ऋत्विक् सुब्रह्मण्यां सुब्रह्मणि साधुरिति निगदो नियत स्त्रीलिङ्गः ता मर्हति तदुद्देश्यां देवतामिन्द्ररूपामाह्वयती- त्यर्थः । आह्वानप्रकारं दर्शयति सुब्रह्मण्यीमितिवत्स्त्रीलिङ्ग मिवादानपूर्वकं त्रिराह त्रिः पठेत् । कुतइत्यत्राह हि शब्दो हेतौ । यस्माद्देवाः त्रिषत्याः त्रीणि मनोवाक्काय- कर्म्माणि सत्यन्यसंवादीति येषां तेषां ते त्रिषत्या तस्मा- दतिप्रशस्तं त्रिराट्‌वान् कर्त्तव्यमित्यर्थः । हेतुवन्निगदोय- मर्थवादः । तेन ह्यन्नं क्रियत इतिवत् न तु हेतुः । हेतुत्वे हेतुसापेक्षे च नैरपेक्ष्यलक्षणं न सम्भवेदिति निगदशेषमुपा- दायोपादाय व्याचिख्यापयामास प्रथमं तावदिन्द्रागच्छेति पदद्वयं व्याख्यातुमुपादत्ते इन्द्रागच्छेति । तद्व्याचष्टे । यदाहेन्द्रागच्छेत्ये तद्वा अस्य प्रत्यक्षं नाम तेनैवैनं तदाह्वयति इन्द्रागच्छेति सुब्रह्मण्याय यदाह इदमेव अस्य इन्द्रस्य प्रत्यक्षं नाम तदा तेनैव एवं प्रकृतत्वा दन्वादेश- विषयएनादेशः । एनमिन्द्रमाह्वयति पुनर्निगदशेषमाख्यातु मुपादत्ते हरिव आगच्छेति । हरिवः मतुवसोरुः सम्बुद्धौ छन्दसीति नकारस्य रुः। हरिव नाम तद्व्याचष्टे शुक्लकृष्ण- पक्षौ वा इन्द्रस्य हरी हरिताख्यानामादित्यात्मकत्वादिन्द्रस्य तयोर्हरित्वप्रतिपादनं हि यस्मात् ताभ्यां पूर्वपक्षापर- पक्षाभ्यामिदं सर्वं जगद्धरति कालात्मकेन नियच्छतीति

निगदशेषान्तर मुपादत्ते मेधातिथेर्मेषेति। तद्व्याचष्टे मेधातिथिं हरति॥ काण्वायनं कण्वस्य युवापत्यं मेधातिथिनामानमृषिमिन्द्रो मेषोरूपधरो भूत्वा जहार स्वर्गं निनाय किल तथा बह्वृचा आमनन्ति। इत्था धावन्तमद्रिवः काण्वं मेधातिथिं मेषोभूतोऽभित्यं नरः। अतो मेधातिथे र्मेषेतीन्द्रः सम्बोध्यते पुनरपि निगदशेष मुपादत्ते वृषणश्वस्येति मेनाख्यस्य वृषणश्वस्य काचिन्मेनका नाम दुहिता आस बभूव तां मेनकामिन्द्रश्चकमे ह कामितवान् मेनाभवं वृषणश्वस्य सुतातो इति नामान्तर मुपादत्ते गौरावस्कन्दिन्निति। तद्व्याचष्टे—इन्द्र किल गौरमृगो भूत्वा अरण्यादवस्कद्य स्कन्दिर्गत्यर्थः राजानं सोमं सोमो वै राजा इति श्रुतेः पिवति स्म पयो गौरावस्कन्दो चेति कर्मधारयसमासेन गौरावस्कन्दिन्निति इन्द्रः सम्बोध्यते नामान्तर मुपादत्ते—अहल्यायै जारेति। बहुलवचनात् षष्ठ्यर्थे चतुर्थी अहल्याया जार इत्यर्थः। तद्व्याचष्टे अहल्याय ह इन्द्रः किल मित्राया दुहिता मैत्रेयी तस्या अहल्याया जारः उपपतिरास बभूव तद्व्याचष्टे—कौशि कौशिकः कुशिकगोत्रोत्पन्नः कश्चित् ब्राह्मणः एनां प्रकृतामहल्या मुपन्येति स्म ह इण गतौ लट्। सु इति परोक्षे लिट् उपनीत उपसर्गेण उपयन् उपगच्छन् उपयेमे किलेत्यर्थः। तस्या जारः सन् तद्भर्तृस्थाने तिष्ठतीति। कौशिकब्राह्मणेत्युपचारादामन्त्र्यते॥

अथ नामान्तर मुपादत्ते गौतम ब्रुवाणेति। गौतम इति ह ब्रुवाणः। यद्वा गौतमरूपेण चरन् गौतम इति

शब्द्यमाने गौतमब्रुवाणः । ब्रुवतेः कर्तरि व्यत्ययेन कर्म्मणि शानच् । तस्य सम्बोधनं गौतमब्रुवाणेति तद्व्याचष्टे, देवासुरा देवासुरा ह देवाश्चासुराश्च किं संयत्ताः परस्परं योद्धुमासक्ताः आसन् वभूवुः तानन्तरेण तेषां मध्य अन्तरान्तरेण युक्तइति द्वितीया गौतमो नाम ऋषिः शश्राम श्रम मुपाविशन् तं गौतम मुपेत्योपगम्येन्द्रः एव-मुवाच—असुरा भवन्तं बाधेरन् । अत इहैवास्माकं स्पश-श्चारो भूत्वा भवान् भवत्विति एवमुक्तवन्तमिन्द्रमृषिराह—अहमेव चाररूपेण वर्तितुं नोत्सहे उत्साहं न करोमीति ।

अथ गौतमवचनानन्तरमिन्द्रो व्रवीति । अहं भवतो रूपेण स्पशःसन् चराणीति तदनुमन्यते भवानिति पुनर्गौतमो व्रवीति हे इन्द्र त्वं तथा येन प्रकारेण चरितुं मन्यसे तथा चरेति पश्चादिन्द्रः तथा चरेदिति शेषः । स इन्द्रस्तत्तदानीं गौतमोऽहमिति स्वयं वदन् गौतमरूपेण गौतमइति जनैरुच्यमानो वा चचारेति । यत्तदेवाचरणमाह—गौतमेतीति । गौतमब्रुवाणेति पदस्यैकदेशः, एकदेशा-दानप्रतीतिः निगदशेष मुपादत्ते—इत्यहेति । हे मघव-न्निन्द्र ! इत्यहे एतावदहे अहे द्व्यहेतिक्रान्ते सुत्यामागच्छ । परेद्युः सुत्या चेत् श्वःसुत्यामागच्छेत्यादेशः कार्य्यः । तथा च जैमिनिः । श्वःसुत्या मित्यौपवसथेहनि निर्दिशत् । सुत्याया आगमनेऽहनि तु अद्य सुत्या मागच्छेत्यादेशः कार्य्यः । तथा च द्राह्यायणः—अद्येति समानाहनि तद्व्याचष्टे तद्यथार्हेति उपलक्षणमेतत् ॥ तत्र यथार्हतो यथायोग्यं ब्रूयात्तस्यैव विवरणमित्यहेत्यत्र तावदहे द्व्यहे त्र्यहे देवाः

वो युष्मदर्थं हविषां पक्तास्मि तदा गच्छतेति । एवमेवानेन प्रकारेण यद्ब्रूयात्तद्देवेभ्यः सुत्यामेव प्राहेति निगदशेषं प्रति हेतु मुपादत्ते देवा ब्रह्माण इति॥ देवा ब्रह्माण आगच्छता-गच्छतागच्छतेति निगदशेषः॥ हे देवा ब्राह्मणोऽहं ब्राह्मणा आगच्छत निरुक्तिरदृष्टार्था । वा एतद्द्याचष्टे देवा हैवेति ॥ देवाः सुप्रसिद्धाः । वस्वादयएव वा देवाः ।

अथ ह पुनः । एते वक्ष्यमाणा एव मनुष्यदेवाः ये ब्राह्मणाः परिब्रुताः कीर्त्त्यन्त इति शेषः । अथ हैते मनुष्य-देवाः इत उक्तं शुश्रुवांसः श्रुतवन्तः अनूचानाः साङ्गवेदा-ध्यायिनो ये ब्राह्मणास्ते मनुष्यदेवाः । किं देवानां भाग-धेयं किं च ब्राह्मणानां तत्र दानेन प्रीणयितुं तानुभयाना-ह्वयतीत्याह—आहुतय एव देवानां प्रीणातीति देवा-दीनां वस्वादीना मित्याह्वय देवभागधेयं । मनुष्यदेवानां ब्राह्मणानां दक्षिणा गवादिरूपा भागधेयं तस्यैव विव-रणम् । हि यस्मादाहुतिभि र्हि देवान्प्रीणयति यजमानः तथा मनुष्यदेवान् शुश्रुवुषः श्रुतवन्तः शुश्रवण इति अस्मात् क्वसुः तस्य द्वितीयाबहुवचने वसोः सम्प्रसारेण कृते रूपम् अनूचानान् साङ्गवेदाध्यायिनो ब्राह्मणान् दक्षिणाभिः प्रीणाति प्रीणयति ॥ १ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ-प्रकाशे षड्विंश ब्राह्मणाख्ये द्वितीयब्राह्मणे प्रथमाध्याये प्रथमः खण्डः ।

---

सुब्रह्मण्येत्युत्तरं सुब्रह्मण्येति स्त्रीलिङ्गसाम्याट्टक् सुब्रह्मण्या अयं सुब्रह्मण्या शब्दवाच्यो मन्त्रः निगदभूत एव भवति निगदो नाम यजुर्विशेषः। तस्मात् यजुर्यथार्थः सामात्मा-मकारिणः सामगाः सामभिः सह कुर्वन्ति। एवं पठन्ति— तस्मात्सामगैः पठ्यमानत्वात्तस्मात्सर्वमेव ऋग्यजुः साम चेति ब्रूयात्। निगद सामात्मत्वेनमवद्भिप्रपठ्यपि स्त्रीपुंनपुं-सकमित्यभिप्रायः एवं सुब्रह्मण्याह्वानं दर्शयित्वा ततो यत् कर्त्तव्यं तदाह तद्वा एतदिति सुब्रह्मण्यामाहूय तद्वा एत-द्यजमानं वाचयति वाचयेत् सुब्रह्मण्याधिष्ठिते रक्षणं सञ्च-रतां अपहत्यै अपहननाय यजमानस्तुत्यर्थवाचनीयं तत्सर्व मेवेति ब्रूयात् यत् येनेन्द्रपर्जन्यः वर्षामुखो मेघः सन् पुरो-गामी भूत्वा अभिप्रैत् तान् देवान् तेन पुंरूप पर्जन्यात्म-कत्वेन पुमान् यत् येन वा ऽग्न्या असुरानबधीत् तेन च स्त्रीरूपवृष्ट्याऽग्न्यात्मकत्वेन स्त्री भवति यद्येन विष्णुना अहन् विद्युच्छब्दो नपुंसक स्त्रीलिङ्गोऽपि औणादिकः क्विप् बहुलवचनान्नपुंसकलिङ्गो भवतीति तेन नपुंसकेन विद्यु-तात्मकत्वेन नपुंसकं तस्मात् सुब्रह्मण्या सर्व मेवेति भव तीति ब्रूयादिति सर्वमेवार्थे सुब्रह्मण्यायोगित्वविषयत्वेनापि स्त्रीपुंनपुंसकात्मकत्वं व्युत्पादयितुं विमर्शपूर्वकमृग्यजुः-सामात्मकं दर्शयति यदाहुर्ऋगिति तत्र सुब्रह्मण्यानाम-धेयत्वेन सुब्रह्मण्याकिमृक् अथ यत्र प्रनूद्यामनूद्य व्याचष्टे सासि सुब्रह्मण्येति। हे सुब्रह्मण्ये त्वं सा प्रसिद्धा सर्व-मेवात्मकेन्द्रसूयासि भवसि तस्यास्ते पृथिवी प्रथमः पाद इति यजुर्नाम आह यजमानः पठेत्। तेन मन्त्र पाठेन

यान्येवासुररक्षांसि असुराश्च रक्षांसि च पृथिव्यां सन्ति तानि सर्वाणिरेवापहते विनाशयति। एवमन्यदपि व्याख्यायते। बत्ते तव परोरजाः रजसः लोकात्परः उत्कृष्टो ब्रह्मणोलोकः स परोरजाः स एव पञ्चमः पाद इति। तदाह रजसः परं ब्रह्मणः स्थानं तदेतत् स्थानं परोरजा इत्येतत्पर माह तया सा प्रसिद्धा त्वं नोऽस्मभ्यं इषमूर्जितं तद्रसं चत्रप्रसूरय इति यदाह तेन सा देवता अस्मै यजमानाय इषमूर्जं व धुदुग्धे किं च त्वं वीर्य्यं बलं वान्नाद्यं अन्नादिकं धनं च धेहि प्रयच्छेति यदाह तेन सा अस्मै यजमानाय वीर्य्यम-न्नाद्यं दधातीति निगद प्रशंसा पूर्वकं सुब्रह्मण्या ह्वानस्य कालं दर्शयति। ब्रह्म श्रीर्वै इति अयं सुब्रह्मण्या निगदो ब्रह्मणा ब्रह्म श्रीब्र वैह्म वेद वै न श्रीयते ब्रह्म वेदं श्रय-तीति वा ब्रह्मश्रीरेव। किञ्च सुब्रह्मण्येति यत्साम प्रसिद्धं सामगैः क्रियमाणत्वात् यस्मादेव तस्मात्प्रातरनुवाक उपा-कृते प्रातरारब्धेविसंस्थिते समाप्ते च यज्ञे प्रत्यहम् अहर्गणेषु सुब्रह्मण्यः सुब्रह्मण्या माह्वयति। प्रशंसापूर्वकं सुब्रह्म-ण्याय अनडुद्युक्तस्याऽनसो दानं विधत्ते एव वै इति एष वै यजमानो ब्रह्माग्निं सुब्रह्मेन्द्रञ्चाप्नोति योय मनडुह्वां एतदनः सुब्रह्मण्याय ददाति। यथोक्तलक्षणायाः सुब्रह्म-ण्याया वेदितारं प्रस्तौति सुब्रह्मणोवै इति यः सुब्रह्म एवं यथोक्तप्रकारेण वेद जानाति सोऽस्य यजमानस्य यज्ञम् ऋग्यजुःसामात्मकवेदेनैव श्रिया पशुपुत्रादीनां समृध्या च समर्द्धयति समृद्धिं करोति। पुनरपि सुब्रह्मण्यां प्रशंसति अथोखल्वाहुरिति अथो इति अवान्तरवाक्योपक्रमार्थः

आहुः खलु प्रायश्चित्तविदः यच्च यदप्यवगतं परिज्ञातं यच्चानवगतं यच्चानवगत मपरिज्ञातं तस्य सर्वस्यैषैव प्रायश्चित्तविदुषा सुब्रह्मणोन कृतं सुब्रह्मण्याह्वान मेव प्रायश्चितं तस्मादेवं विदं यथोक्तप्रकारेण ज्ञातारं ब्राह्मणं सुब्रह्मणं कुर्वीत यजमानः अन्यथैवं विदं कुर्वीतेति ॥ २ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे प्रथमाध्याये द्वितीयः खण्डः ॥ २ ॥

---

## अथ तृतीयखण्डः ।

अथ सर्वयज्ञस्य विशेयानि दर्शयितुं प्रथमं प्रातः सवने विज्ञेयं दर्शयति । एकच्छन्दः प्राय इति । प्रातः सवनमेकच्छन्दः । एकं गायत्रमेव छन्दो यस्य तत्तथोक्तम् । बहिष्पवमानीयानामाज्यस्तोत्रीयाणां च ऋचां सर्वासां भवति अपि गायत्रच्छन्दस्कत्वात् तस्मात्तत एव पुरुष एकपाद्भवति कथमेकपात् पुरुषो द्विपात् सवं तत्र दृश्यते श्रूयते च द्विपाद्वै पुरुष इति अत इत्ययुक्तम् । यद्यपि द्विपात् पुरुषस्तथापि पथि गच्छन् अग्रमेकपादमन्यत्र पुरोदेशे हरति प्रक्षिपति अन्येनैकपादेन भूमौ प्रतिष्ठति अत एकपात् पुरुष इति ।

अथ माध्यन्दिने सवने विज्ञेयं दर्शयति त्रिच्छन्दा इति । माध्यन्दिनो माध्यन्दिनसवनसम्बन्धी पवमानः । त्रिच्छन्दास्त्रीणि गायत्री-बृहती-त्रिष्टुबाख्यानि छन्दांसि यस्य तथोक्तः अवाञ्चः प्राणास्त्रयः एको मूत्रविसर्ज्जनस्य हेतुरपरः

पुरीषविसर्जनस्य अन्यो रेतोविसर्ज्जनस्य तयो अर्वाञ्चो रेतसो मूत्रपुरीष इति श्रुतिः। तत्रैव विभ्रानान्तरमाह द्वे गायत्रयामिति। माध्यन्दिने पवमाने गायत्र्यां गायत्रच्छन्दस्कायां द्वे सामनी गायत्रा मह्रीयवनामनी क्रियेते। तस्मात्तत एतद्वयं प्राणनमपाननं चेत्येव च द्वयमुत्तरेणोर्ध्ववर्त्तिनः प्राणेन करोति पुमान्। यद्यपि रेतो विसर्ज्जनं तृतीयमपि धर्म्माधर्मेण प्राणेन करोति। तथापि रेतोमूत्रयोरेकीकरणेन द्वयमपरेण करोतीत्युच्यते। तत्रैव विभ्रियान्तरमाह द्वे बृहत्यां सामनीति। बृहत्यां बृहतीच्छन्दस्कायां ऋचो द्वे सामनी रौरवयौधाजये नामधेये क्रियेते। तस्मात्तत एव द्वयं प्राणनमपाननं चेति एतद्वयमुत्तरेणोर्ध्ववर्त्तिना प्राणेन करोति पुमान्। विभ्रेयान्तरमाह एकं त्रिष्टुभीति। तत्रैव त्रिष्टुभि त्रिष्टुप्छन्दस्काया ऋचि एकं सामौशनाख्यं क्रियते तस्मात्तत एव एकैव नाभिर्म्मध्यवर्त्ती प्राणः। नव वै पुरुषे प्राणा नाभिर्दशमीति श्रुतिः। सत्वेक एव इतरप्राणवत्तस्य वृत्तिभेदाभावात् नाभिः किं कर्मेत्यत्राह। प्राणानामिवेति नाभिस्तु प्राणानां मूर्द्धा अधोभाग वर्त्तिनामुभयेषामपि विधृतिर्विधारिका यथा करणानां प्राणधारणादन्यकर्मास्ति तद्वदस्य कर्मान्तरं नास्ति किं तु प्राणधारणमेकमेव कर्मेत्यभिप्रायः। एवं पुरुषविधस्य यज्ञस्य प्रातःसवनम्। प्राणस्थानीयो माध्यन्दिन एव इत्यभिहितम्।

अथेदानीं तत ऊर्द्धं क्रियमाणानि चत्वारि स्तोत्राणि किमात्मकानीत्यत्राह अथ यदेवेति। पुनस्ततोमाध्यन्दिना-

त्पवमानादूर्ध्वं यदेव स्तोत्रं क्रियते। यच्छब्देन सर्वस्तोत्राणां सामान्येन निर्देशाद् यानि स्तोत्राणि क्रियन्त इत्यर्थः। तानि पृष्ट मध्यदेहस्य पश्चाद्भागः तत्स्थानीयानि। कथमित्यत्राह बार्हतानीति। तानि पृष्ठानि बार्हतानि बृहतीषु भवानि। तत्र बृहद्रथन्तरयोर्बृहतीप्रमुखत्वात् श्येतनौधसकालेयानां पुनर्बृहतीष्वेवोत्पन्नत्वात् किञ्च तान्येकगायत्रीकाणि। बृहत्यएव कीकसाः पृष्ठमभिसमायन्तीति तानि पृष्ठानि बार्हतानि वामदेवनामकस्यैकस्य साम्नो गायत्र्यामुत्पन्नत्वात्। यस्मादेवं तस्मात्पुरुषपर्शवः पार्श्वास्थीनि। बृहत्य एव भूयस्यो बृहत्यः पार्श्वास्थीनि यास्तथा बृहत्येव कीकसाः पृष्ठास्थ्यवयवाः तत्स्थानीयाः पृष्ठमभिसमायन्ति पृष्ठस्थानीया एव गायत्रीं समागच्छन्ति। तत ऊर्ध्वं क्रियमाणं किमात्मकमित्यत्राह अथ यदेव तत इति।

अथ पुनस्ततो माध्यन्दिनः पवमानादूर्ध्वं यदेव क्रियमाणं स्तोत्रं स आर्भवः पवमानः पुरुविधस्य यज्ञस्य मुखं भवति मुखे सम्भूतत्वादित्यर्थः। मुख्यादीनां गायत्र्यादीनां प्राणादिरूपतामाह प्राणो गायत्रीति। मुखरूपे आर्भवपवमाने विद्यमाना गायत्री प्राणस्थानीया प्राणापानव्यानास्त्रिवृत्प्राणः॥ गायत्र्यपि त्रिपदेत्यतो गायत्र्याः प्राणसाम्यम् उष्णिक्ककुभौ श्रोत्रे अनुष्टुब्वाग्वाक् जातीया। वाग्वा अनुष्टुबिति श्रुतेः। जगती चक्षुः। यदतानुक्तमनुदाहृतमक्षरपंक्त्यादिषु विकृतिषु क्रियमाणं छन्दः तत्किमात्मकमित्यत्राह पुष्टिर्यदन्यदिति। यदन्यदुदाहृतेभ्यो व्यति-

रिक्तमक्षरपङ्क्त्यादि तत्पुष्टि गायत्र्यां मुख्यानामपि पुष्टिहेतुः॥ छन्दोविभागं दर्शयित्वा इदानीं साम्नां विभागं दर्शयति द्वे गायत्रामिति। गायत्र्या ऋचि गायत्र संहिताख्ये सामनी क्रियेते तस्मात् पुरुषः प्राणेन द्वयं प्राणनं चापाननं च करोति तस्यैव विवरणं प्राणिति चापानिति चेति ककुबुष्णिहौ द्वे अपि एकमेव छन्दः॥ द्वयोरप्यष्टाविंशत्यक्षरात्मकत्वात् तत्र ककुभि द्वौ प्रथमतृतीयौ पादावष्टाक्षरौ मध्यमः पादो द्वादशाक्षरः। उष्णिहि तु प्रथमतृतीयावष्टाक्षरौ तृतीयो द्वादशाक्षर इति विशेषः। तत्र द्वे सफपौष्कलाख्ये सामनी क्रियेते। तस्मात् पुमान् समानमन्येन सच्छ्रोत्रमेकेनैव श्रोत्रेन्द्रियेण द्वेधेव पुरस्तात् पश्चाच्चा-शृणोति। अनुष्टुभि द्वे श्यावाश्वान्धीगवनामकेस्तोमनी भवतः तस्मात् पुरुषोद्वयं सत्य मनृतं वा करोति वदति। तस्यैव विवरणं सत्यं चानृतं च वदतीति। जगत्यां कावाख्यमेकं साम भवति। तस्याधिष्ठानं तदा अक्षिणी द्वे सती समानसर्वेण लक्षणेन पुरस्तादायान्तं पश्यतः करणे कर्तृत्वोपचारः। ननु पश्चात्पृष्ठत आयान्तं भावं येऽन्नु वा पुमान् पश्यतीति यथा श्रोत्रेण पृष्ठतः। शब्दं शृणोति तद्वदित्यर्थः। अवशिष्टस्य यज्ञायज्ञीयस्य मूर्द्धात्मकत्वं दर्शयति अथ यदेवेति अथ पुनस्तथान्तो यथोक्तेभ्यो गायत्र्यादिभ्यः सामभ्य ऊर्द्धं यत्साम भवति। तद्यज्ञायज्ञीयमूर्द्धा पुरुषविधस्य यज्ञस्य शिरःस्थानमुत्तमत्वात्। यथोक्तं यज्ञायज्ञीयविदः स्तौति। यः पुमानेवं यज्ञायज्ञीयं मूर्द्धानं वेद अङ्गानां मध्ये

मूर्द्धा श्रेष्ठो भवति एतदेव विवृणोति अध इवेति। मूर्द्धा अन्यान्यङ्गानि अधइव वा एव पुरस्तादेव भवति खलु मूर्द्धा तु एषामुपरि एव पर्य्येव भवति यः पुमानेवं यज्ञायज्ञीयं मूर्द्धानं वेद अस्मादेव विदुषोन्येस्वाज्ञातयोऽध इव वाऽधरा भवन्ति विद्वांस्तु स्वाना मुपरीव श्रेष्ठो भवति अथ यज्ञप्रतिपादकस्य वेदस्यार्थतो ज्ञानं तच्च वचनञ्च प्रशंसति यज्ञो वा अध इति॥

अथ शब्दो वाक्यादौ समन्वेति। यज्ञो वै यजनहेतुत्वाद्यज्ञः अयमेव यज्ञ इति। यज्ञमाहुस्तद्विदो व्याहरन्ति। यः पुमाननेवं यज्ञप्रतिपादनमेवं विदित्वा अनुब्रूते प्रवचनं करोति। एष वा अयमेव खलु जातः सफलजन्मा भवति अन्यस्तुजातोऽप्यजात इत्यभिप्रायः। किञ्च एष वावलुप्तजरायुर्गर्भवेष्टनं तत्स्थं स्थानमाच्छादकं वेदं तदर्थविषयमज्ञानं जरायुशब्देन विवक्षितम्। तदव्यलुप्तं यज्ञस्य स तथोक्तः। किञ्चैष त्वेव मार्त्विजीनः ऋत्विक्कर्माई: अनुष्ठानस्य ज्ञानपूर्वकत्वात्। अपि च यदा वैनैव काले यज्ञप्रतिपादक एतं मेद मनु ब्रूते।

अथ इह तदैव खलु एव मनुब्रुवाणं अन्ये गृणन्ति। असावन्ववोचत सम्यगनुवचन मकार्षीदिति प्रस्तुतकीर्त्तिः भवतीत्यर्थः। यत्रैव यदायं विख्यातो भवति तदा खलु सा न वक्ता जायते पुण्यजन्मा भवति यज्ञेषु यज्ञप्रदेशेषु गायत्र्यादीनां छन्दसां न्यूनाक्षरत्वमस्तु। तत्र प्रातः सवनसामान्येन गायत्र्या जनाक्षरत्वं स्तौति जनाक्षरा इति। प्रातः सवने गायत्री जनाक्षरा तद्यथा बहिष्पव-

माने उपास्मै गायतानर इत्येषा गायत्री ऊनाक्षरा प्रातः सवनं प्रजानां प्रजात्यै । पवमानायेन्दव इति द्वितीयपादस्य सप्ताक्षरत्वात्तथा तत्रैव दविद्युतत्यारुचेत्येषां गायत्री न्यूनाक्षरा । तथा आज्येष्वपि होतुराज्ये तन्वासमिद्भिरङ्गिर इत्येषा गायत्री । तत्र बृहच्छोचायविष्ठेति: तृतीयः सप्ताक्षरः । आनोमित्रा वरुणेत्ययं पादः सप्ताक्षरः अच्छावाकस्यापि इन्द्राग्नी आगतं सुतमित्येषा गायत्री । तत्र गीर्भिर्नभोवरेण्यमिति द्वितीयः पादः सप्ताक्षरः एव-मन्यदपि उदाहार्य्यमेतत्रायहुः ऊनाक्षरत्वं प्रजानां प्रजात्यै प्रजननाय भवति । तथाहि लोके प्रजाः सर्वाः ऊनादिव गुह्यप्रदेशात् न्यूनादेव देशात्परिच्छिन्नदेशाः प्रजायन्ते । एवं सामान्यतः प्रातः सवने गायत्र्या न्यूना-क्षरत्वं प्रशस्येदानीं तत्रैवामहीयवं गायत्र्यां यौधाजयश्च साम भवति । ऊनाक्षरा इति आमहीयवे साम्नि गायत्री न्यूनाक्षरा । तद्यथा उच्चातेजात मन्धस इति एषा गायत्री न्यूनाक्षरा दिविसद्भूम्याददइति द्वितीयस्य सप्ताक्षरत्वात् । तथा एनाविश्वान्यर्य इत्येषापि आद्या द्वितीययोः सप्ता-क्षरत्वात् प्रजानामित्यादि पूर्ववत् । माध्यन्दिनसवने पृष्ठेषु वामदेव्ये यजमानलोक एव स मध्ये हि यज्ञस्य यजमान इति । ऊनाक्षराद्इति । अन्यैश्चानाक्रान्त एव हि देशे यजमानस्तिष्ठति न त्वन्यैराक्रान्ते अतस्तत्स्थाने गायत्र्या न्यूनाक्षरत्वं गुण एव वा वामदेव्यस्य यजमान-स्थानत्वोपपादनम् । तथाहि यज्ञस्य मध्ये वामदेव्यं क्रियते स यजमानस्य दान्तनी यज्ञस्य मध्ये एव वर्ततइति

तृतीयसवन आर्भवपवमाने संहितसाम्नि गायत्र्या न्यूनाक्षरत्वं प्रशंसन्ति ऊनाक्षरा इति। संहितनामधेये साम्नि प्राणापानयोः परिरोधं वा धनं न प्रतीयात् न कुर्य्यादित्यर्थः। तस्मादिदं न हि विष्टदेतकरकान्दि नाल ग्नुराध्ये मावर्त्तेदभीष्टा उपरुपानादाहीयेतेत्यर्थः। पूर्वमेव करकादिकं तृडाद्यपनयनायोपधमि तथा वायोः सञ्चरणा- त्तडपनयो भवति तत्रापि न्यूनाक्षरत्वमेव यज्ञायज्ञीयं प्राणानामुत्सृष्टौ गायेदित्यर्थः। गायत्री न्यूनाक्षरा पर्षि- राधीमधोमित्यत्र तृतीयस्य सप्ताक्षरत्वात् यदेतं न्यूनाक्षरत्वं गायत्र्यास्तत् प्राणापानयोरुच्चारे सञ्चारणे तस्मिन्निमित्त- मेव भवतीत्यर्थः। तथाहि प्राणापानौ ऊनादिव परिच्छिन्ना देवता सा देशानुच्चरतः सञ्चरतः अतो गायत्र्या न्यूना- क्षरत्वात्तथास्तमित्यर्थः। तत्रैव यज्ञायज्ञीये सतो बृहद् गायत्र्या न्यूनाक्षरत्वं स्तौति। ऊनाक्षरं यज्ञायज्ञीयमिति। यज्ञायज्ञीयं साम ऊनाक्षरं तदीयप्रगाथे ऊर्जोनपात- मित्येषां सतो बृहती न्यूनाक्षरा तृतीयपादस्यैकादशा- क्षरत्वाच्चतुर्थस्य सप्ताक्षरत्वात् ततस्तत्र गीयमानं यज्ञाय- ज्ञीयं न्यूनमित्युच्यते तदेतत् न्यूनत्वं प्राणानामुत्सृष्ट्यै भवति। एवं प्रकारा एव यत् प्राणानां गतिर्नाम तत्र ऊनाक्षरत्वं गुण एव तदेतस्योदाहरण मुपपादयति यो हि पूर्णमिति। याहि यः पुमान् योगेनालाद्यन्तवेतत्तडपनयनायोदकपूर्ण- करकाहिकं ययुपधमेयदि च तदुपधन् प्रतीयात् प्रति गच्छेत्। न हि उपाध्माता विपतत् विपन्नो भवति व्यर्थ- प्रयासो भवतीत्यर्थः यथोपध मनक्षरत्वं स्तौति त्रिष्वपि

सवनेषु गायत्र्या न्यूनाक्षरत्वं प्रशंसति तदाहुरिति । इति तत्रैव सर्वमाहुर्ब्रह्मवादिनः सवनानामेव खल्वेते गायत्र्यादिरूपाः प्राणा उदानाः सञ्चारहीनास्तिष्ठन्ति तेषां सवनसम्बन्धिनां गायत्र्यादीनामूनाक्षरत्वेन प्राणानामुत्सृष्टिरेव भवतीति ।

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे प्रथमाध्याये तृतीयः खण्डः ॥ ३ ॥

---

## अथ चतुर्थखण्डः ।

ज्योतिष्टोमे सुत्येऽहनि प्रातरनुवाको ध्रुवं विश्वरूपमानं विधातुं तत्र कश्चित् प्रकारमादौ विधत्ते अध्वर्य्यवित्याहेति हे अध्वर्य्यो मे मह्यं उद्गात्रे मा मनिवेद्य वेदन मामन्त्रण मकृत्वा होत्रे प्रातरनुवाकं प्रस्तं मा स्मोपाकरोः उपाकरणं माकार्षी रित्यध्वनाध्वर्य्युं प्रत्याह वदेदित्यर्थः इति शब्दोऽवान्तरवाक्यपरिसमाप्तिद्योतनार्थः तथाच द्राह्यायणः । न माननामन्त्र्य प्रातरनुवाक मुपाकुर्य्या इत्यध्वर्य्युं ब्रूयादिति । ततः किमित्यत्राह सोऽध्वर्युः प्राहेति । सएव मुद्गातोक्तोऽध्वर्युः प्राह । प्रातरनुवाकोपाकरणात् पूर्व मेन माश्रयेदित्यर्थः । ततः किं कुर्य्यात् उद्गातेत्यत्राह । सह्रत इति । स उद्गाता ह्रतोऽध्वर्युणामन्त्रितः सन् हविर्द्धानमण्डपं गच्छेत् गत्वा स पूर्वया द्वारा हविर्द्धानमण्डपस्य पूर्वेण द्वारेण हविर्द्धाने सोमात्मकस्य हविष आधार भूते द्वे शकटे

प्रपद्यते प्रपद्यत अतः हविर्द्धानद्वयं प्राप्तस्य उद्गातुः सनियमं विश्वरूपगानं विधत्ते सदक्षिणस्येति । उदङ्मुखो मित्रवर्ग मुपविश्य विश्वरूपाः विश्वरूपशब्दवती पुञ्जेवायु शतपदी मित्ये तस्यां पङ्क्तौ गायत्री प्रगाथ प्रगाथनेनोत्पन्नानि स्तोत्राणि गायति । तथाच द्राह्यायणः पूर्वया द्वारा प्रपद्योत्तरेण हविर्द्धाने पूर्वेण चक्रे उदङ्मुख उपविशेत्तूष्णीमिति । अस्यार्थः । पूर्वया द्वारा हविर्द्धानं प्रपद्यान्तरेण हविर्द्धाने शकटयोर्मध्ये पूर्वेण चक्रे चक्रयोः पुरस्तादुदङ्मुखस्तूष्णीं स्तोत्रधर्म्ममात्र मास्ते मन्त्रवत् कृत्वा उपवेशनं हि त्वोपविशेदिति विश्वरूपगानविधिर्न नित्यः षोड़शिग्रहवत् वैकल्पिकः तथाचोपपादितं द्राह्यायणेन पूर्वोत्तरपक्षोपन्यासेन विश्वरूपाणां गानं यजमानेनोक्तः प्रत्याचक्षीत । चतुष्टोमस्तोमसम्पदतिरेकाद्ग्रहशस्त्राभावाच्च वसतीवर्य्यौग्रहः प्रातरनुवाकः शास्त्र मासाञ्च न सम्पल्लोपो यथान्यैः परिसामभिर्गायेतिचैव ब्रूयादिति अस्यार्थःयजमानेन चोदितेऽप्युद्गाता विश्वरूपाणां गानं प्रत्याचक्षीत न कुर्य्यादन्यथा चतुष्टोमस्याग्निष्टोमस्य स्तोतुः स्तोत्रीया अतिरिच्येरन्निति। किञ्च प्रातरनुवाक मेकसृजासामभि विश्वरूपाभि सम्पन्नत्वादिवाहं गृहीत्वा चमसश्चोन्नीय स्तोत्र मुपाकुर्य्यादिशं सपतीति ग्रहात् । शस्त्रयोरावश्यकत्वात्तयोरत्राभावात् । विश्वरूपगानं न कुर्य्यादिति गायननिषेधः । अथ तदनुपादनवसतीवर्य्यएव ग्रहः । प्रातरनुवाक एव शस्त्रमासामिति विश्वरूपाभिः सम्पन्नत्वाद्विरोधोपि नास्ति सोमस्य तद्देवतानां वास्तुरेरभावात् । यथान्यैः सम्पद्विरोधो नास्ति

तद्वत्तदीयगानेन तत्र यजमाननियोगः प्रधानं किन्तु यथोक्तग्रहशस्त्रक्ऌप्तिः। तथा सति यदिच्छेत् तर्हि यजमानो नानुक्तोऽपि गायेदिति विवक्षित मिति। अतो विधिनिषेधयो रुभयोरपि सूत्रकारेण दर्शितत्वाद्वैकल्पिकोऽयं विधिरित्यवगम्यते। विश्वरूपागानं प्रशंसन्ति। क्षत्रं वै इति प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम्। क्षत्रं वै क्षेमं यागरक्षाहेतुत्वात्। अप्रगीतसाध्या स्तुतिः शस्त्रं। विद्यागसम्बद्धेतुत्वात्। यदि विश्वरूपां गायेत् अस्य यजमानीयक्षत्रेण विश मनुपुष्टि मनुसृज्य वीर्य्य मनुवत्मत्तनिं सन्ततगामिनां करोति। अथो अपि च स्तुतशस्त्रयो रेव समारम्भाय सम्यगुपपत्तय एव व्यवस्रंसाया विच्छेदासन्तत्यै विश्वरूपागानं भवति। विश्वरूपागानस्य कर्त्तृविशेषादर्शनात्परीक्षया कर्त्तव्यतां द्रढ़यति एतद्ध स्माहेति। मित्रयुसुतो ग्लावो ग्लावनाम कश्चिदृषिः एतद्वक्ष्यमाण माह उक्तवान् किल अद्य प्राह्ण वै प्रातरेव पापवसीयसं व्याकरिष्यामीति अश्रेष्ठं मह्य मिदं श्रेष्ठमिति विभागं करोतीति। एवं शुद्धः स ग्लावः उपवसथ्ये अग्नीषोमीयेऽहनि अपररात्रे प्रातरनुवाकात् प्रागित्यर्थः। सदस्येवोदङ्मुख आसीन उपविष्टो विश्वरूपां गायति आसीत्। सदसीत्ये तत्समीपस्थहविर्द्धानमण्डपं लक्षयति। स पूर्वया द्वारा हविर्द्धाने प्रपद्यत इति पूर्वत्र विद्यमानान् सदसि हविर्द्धानयो रभावाद् विश्वरूपागानेन ज्योतिर्गानं दर्शयितुं कञ्चिदुपवादं दर्शयति। तदुपवाद इति तत्रोऽपवादोऽन्योऽन्यसंवाद कश्चिदस्ति तस्यैव प्रदर्शनं हि अध्वर्य्यो स्तुतं स्तोत्र मनुहोता प्रातरनुवा-

केन शस्त्रेण किं प्रशंसीत शंसन मकार्षीत इत्येवमुपक्रम्य। पृष्ठतोऽध्वर्युं ब्रूयाद्यन्मम कर्म्म तदह मकार्षं मकारिषं तद्धोतारं पृच्छतेति तेन प्रत्युक्ता उपवक्तारो वदेत् होतः त्वं स्तुतं स्तोत्रं अनुहोता प्रातरनुवाके शस्त्रेण किममंसदिति तैरुदितः सन् उद्गाता ब्रूयात् यन्मम कर्म्म तदह मकार्षं तस्मै प्रदर्शनं यद्गेयं तदगासिषं ततः किमित्यत्राह तच्चेद्ब्रूयुरिति। तमुद्गातारं चेदुपवक्तार मेवं ब्रूयुः तेन प्रसिद्धेन हे उद्गातः तमो वै तम एव ज्योतिर्विरुद्ध मेव साम स ब्रूयादिति। स एवं तैः पर्य्यनुयुक्तः उद्गाता एवं ब्रूयात्। तेन प्रसिद्धेन येन ज्योतिः सूर्य्यात्मकं तेजो ज्योतिः प्रकाशक मभूत् तेन येन ऋगपि ज्योतिर्निरव्यक्ताक्षरा भवति। यद्वा ऋक्शब्देन तदधिष्ठानानि लक्ष्यन्ते। किञ्च तेन येन गायत्री ज्योतिः किञ्च तेन येन छन्दोमात्रं ज्योतिः तथा तेन येन सामापि ज्योतिः तथा तेन येन तेजो वै सामरूप्यमिति श्रुतेः। तदपि साम्नान्तदविशिष्टता सूर्य्योपलक्ष्यते किं बहुना तेन येन सर्वापि देवता ज्योतिरभवत्। तज्ज्योतिर्ज्योतिराख्यं नाम सामैवाह समासिषं न तमइति किञ्च युष्मासु प्रतिवक्तृषु युष्मानेव पाप्मना पापरूपेण तमसा विध्यानि बाधन्त युष्मानेवाऽस्मान् करोमीत्याह ब्रूयात्। तत्रैवं सति तान् एव वक्तॄन् पाप्मनैव तमसा विध्यतीति एव मपि पुरा कृत्वा विश्वरूपागानं पक्षे ज्योतींषि गायेदित्यर्थः। यस्तूयते तद्द्वितीय इति न्यायेन स्तुत्यविधिकल्पनस्य युक्तत्वात् अत एव द्राह्यायणो विश्वरूपागानपक्षे ज्योतिर्गानं तस्य कालप्रकारं च दर्शयामास विश्वरूपाश्चेद्गायेज्ज्योतीᳫ्‌-

ष्यपि गायेत्परिहितै प्रातरनुवाके अपोनप्त्रीयं नाम सूक्तं पुरा तस्माद्धोतार मारमयि त्वाग्रयणस्य वानु हिङ्कारं यविन्त्रं धानयन्नास्तावं वा प्राप्य पुरा स्तोमयोगादग्निर्ज्योतिर्ज्योति रग्नि रिन्द्रोज्योतिरिन्द्रः सूर्य्योज्योतिःज्योतिः सूर्य्य इत्येतेषु पदेषु त्रिस्त्रिरेकैक मभ्यासं मनसा गायत्रं गायेदिति । अस्यार्थः विश्वरूपां गायेदिति तर्त्तर्हि होता प्रातरनुवाकाख्ये शस्त्रे समापिते सति तेनैव वक्तव्यम् अपोनप्त्रीयं नाम किञ्चित् सूक्तमस्ति तदनुवचनात् पूर्वं होतार मेत्युक्ता सतनि ज्योतीऽष्यपि गायेत् अथवा आग्रयणं गृह्णतोध्वर्योर्हिङ्कारवेलायां दशापवित्रं धारयन् तानि गायेत् । अथवा आस्तावं वहिष्पवमानस्तुतिदेशं प्राप्य स्तोमयोगात् पूर्वमग्निर्ज्योतिर्ज्योतिरग्निरित्येव प्रथमः पादः । इन्द्रो ज्योतिर्ज्योतिरिन्द्र इति द्वितीयः । सूर्य्यो ज्योतिर्ज्योतिः सूर्य्य इति तृतीयः । एवमेतान् त्रीन् पादान् प्रत्येकं त्रिरभ्यस्य प्रथमे पादे त्रिरभ्यस्तेन मनसा गायत्रं निरुक्तं गायेदेवमुत्तरयोरपि विश्वरूपागानाश्रयस्य ऋचः प्रथमं पाद मनूद्य व्याचष्टे युञ्जेवाचमिति । शतपदीवाचं युञ्जे साम्ना युनज्मीति । यदाह तु वाग्वाव वागेव शतपदी वहुपादयुक्ता ऋगिति शतपदीति गायत्र्यादिभेदेन वहुपादोपेता । तत्तदा तया शतपदा आत्मानं यजमानञ्च प्रातः सनिं सनिर्दानं वहुदानं वोढ़ाता करोतीति । द्वितीयपाद मनूद्य व्याचष्टे । गायेति सहस्रसनिस्तोभाहिदन वहुवर्त्तनि साम गायेदिति साम वै सहस्रवर्त्तनि तदा तेन साम्ना आत्मानञ्च यजमानञ्च सहस्रसनि

मेवोद्गाता करोतीति । तृतीयं पाद मनूद्य व्याचष्टे गायत्र त्रैष्टुभमिति । चतुर्थं पाद मनूद्य व्याचष्टे विश्वारूपाणीति विश्वा सर्वाणि रूपाणि निधनानि संभृतानि सवनानि । संभृतैः संभृतानि सम्पादितानि तेष्वेव समस्तकार्य्यकरणादिति । यदाह तत्तेन विश्वमपि सर्वमेव वित्तमात्मने यजमानाय च सम्भरति । उद्गाता सम्पादयति पञ्चमं पाद मनुवदति देवा ओंवा३सीति देवा इन्द्रादयश्च एतानि सवनानि ओका३सि चक्रिरे कृतवन्त इति वेदितारं प्रशंसति ओकोहास्मिन्निति । यः पुमानेवमुक्तप्रकारेण विश्वरूपागानं वेद अस्मिन्यज्ञो ज्योतिष्टोमादिः उक्तस्थान मेव कुरुते तत्रैव प्रतितिष्ठतीत्यर्थः । पुनराख्यायिकया विश्वरूपागानं स्तौति असितमृगाहस्मेति । पुरा पूर्व्वं कश्यपाः तद्गोत्रोत्पन्ना ऋषयः असितगुणः सन्तो मृगा उद्गायन्ति स्म खलु ।

अथ पुनस्तत्पुनानं सामवेदाध्यायिनम् औद्दालकि मुद्दालकस्या पत्यं कुसुरुविन्दनामानमृषिं ब्राह्मणः कश्चिदुद्गीथाय उद्गीथ भक्ति गानाय च चन्द्रे वव्रिरे वृतवन्तः । ततस्ते ब्राह्मणा ऊचुः । परस्परमेव मवोचन् किल अयं कुसुरुविन्दो नोऽस्माकमग्रणीरित्यर्थः । ऋत्विक्कर्म्मपर्य्यायादतएव हन्तेति प्रश्ने । इमं कुसुरुविन्दं अनुव्याहरामः वयं किञ्चित् प्रतिष्ठाम इति ते पुनरनुव्याहरिष्यन्तः सन्तस्त मुपनिषेदुः समीपं प्राप्ताः स पुनस्तेषामभिप्रायं ज्ञात्वैव मुवाच । हे ब्राह्मणाः वो युष्मभ्यं नमः नमस्कारोऽस्तु । प्राह्णे वै प्रातरेवाहं यजनमस्यापयं परिसमापयामि यथा

तु वै खलु एतस्य ग्रामस्य शीर्णं कीटराद्युपहतं वा गृहादिकं अनुसमादधे किञ्चित् समर्थः समाधत्ते । एवं वै वदत् सैवाहं यज्ञस्य वैकल्यपरिहाराय अर्थिनानेन यजमानेनाधि करिष्यामि नियुक्तोस्मीति तेनोक्तास्ते ब्राह्मणास्तस्मै कुसुरुविन्दाय मनसि स्थितमभिप्रायजातं कः कश्चिदवोचदिति ब्रुवाणाः हिं कृत्य हिंकारं कृत्वोत्तस्थुरिति इति शब्दो वाक्यसमाप्तिद्योतनार्थः ॥ ४ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे प्रथमाध्याये चतुर्थः खण्डः ॥ ४ ॥

---

## अथ पञ्चमखण्डः ।

वाङ्मनसः स्वरूपविदं खलु विश्वामित्रायैव कथमुवाच । वसिष्ठाय ब्रह्मोक्तवान् कथं चोक्तमिति । विश्वामित्राय मन इति । एवं ब्रह्मेति वशिष्ठाय तद्वैतस्मादेवैतद्ब्रह्म वाशिष्ठं वासिष्ठस्यैवावधारणं स एव ब्रह्म विन्दति एवं वाङ्मनसयोर्वेदितारं वाशिष्ठश्च प्रशस्येदानीं तद्विदं वाशिष्ठं वा ब्राह्मणं कुर्वीतेति विधत्ते अपि हैवमिति । अपि ह खत एव एवम्विदं वा यथोक्त प्रकारेण वाङ्मनसयोर्वेदितारं वा वशिष्ठगोत्रोत्पन्नं वा त्रयीविदं वा ब्रह्माणं कुर्व्वीत । सोदाहरणं वाङ्मनसयोर्यज्ञनिर्वाहकत्वं दर्शयति तद्यथेति । तत्त्वैव सति यथा लोके कश्चित्समर्थः उभयवर्तनिना रथेन उभौ वर्त्तन्यौ चक्रे यस्य तेन रथेन यां

यां दिशङ्गन्तुं प्रार्थयते तां तां दिशमुखं प्राप्नोति एवं तथैवउभयवर्त्तनिना उभे वाङ्मनसे वर्त्तन्यौ चक्रस्थानीये यस्य तेनैतेन यज्ञेन यं काममिष्टं पदार्थं कामयते यजमानः तं काममभ्यश्नुते अभितः प्राप्नोति। तथा च बह्वृच ब्राह्मणे प्रव्यन्ते—

अथ केन ब्रह्मत्वं क्रियत इति त्रयीविद्ययेति ब्रूयात् अयं वै यज्ञो योयं पवते तस्य वाङ्मनश्च वर्त्तन्या वाचा हि मनसा च यज्ञो वर्तत इति। अथार्द्धेति अथेति ब्रह्म-कर्त्तव्य विध्युपक्रमे प्राणानामिन्द्रियाणां मध्ये मनोयज्ञ-स्यार्द्धभाग्वे तद्वर्त्तन्यात्मकत्वात्तथासति स ब्रह्मा यद्वाचा व्याह इति वाग्विसर्जनं करोति तत्तदा वाचि मनः प्रतिष्ठापयति वाङ्मनसे एकीकुर्य्यादित्यर्थः। मनु पूर्वकत्वा-द्वाक्यतद्वते। तन्नैवं सति यथा कश्चिदेकवर्त्तिदा एक चक्रेण रथेन न काञ्चन कामपि दिशं न व्यश्नुते न प्राप्नोति। यावदिति ऋग्यजुःसामभिर्होत्रध्वर्युरुद्गातारो यावत्स कर्म्म कुर्युः। तावत्तावन्तं कालं ब्रह्मा वाचंयमो वाग्यमनवान् बुभूषेद्भवेत्। अत्र विशेष माह सूत्रकारः— प्रणीतासु प्रणीयमानासु वाचं यच्छेत्। आज्ञानां विमो-चनात्तास्वेव प्रणीयमानास्वाह विष्कृतस्तस्ययजुषश्चाध्या-समिधः प्रस्थानीयायाइति वा यत्र वा ध्वर्युर्वक्षचो चेष्टेतां यत्र वा न चेष्टेतां वाग्यतः प्रायस्त्येव स्यादिति। अस्यार्थः प्रणीतां प्रणयनमारभ्य तद्विमोचनपर्य्यन्तम्।

अथ वा प्रणीताप्रणीयमानासु आरभ्य आह विष्कृतः हविष्कृदेहीति संप्रेषपर्य्यन्तं। यद्वास्तं यजुरारभ्य आ

समिधः प्रस्थानीयायाः प्रस्थान मनुयाजप्रचारस्तदर्थां समिधस्थानीया तस्य आधानपर्य्यन्तम् अथ वाध्वर्यु र्होत्रोः कर्म्माभावेऽपि ब्रह्मवचो न कामचारः किन्तु तत्रापि ब्रह्मा प्रायेण वाग्यतः स्यादिति ऋग्वेदविहितकर्मन्यूनातिरेके प्रायश्चित्तत्वेन ब्रह्मणा कर्त्तव्यं व्याहृतिहोमं विधातुमादौ वेदत्रयसारत्वेन च व्याहृतीः प्रशंसन्ति प्रजापतिर्वा इति । प्रजापतिर्ब्रह्मा इमान् प्रसिद्धान् त्रीन्वेदानसृजत । तेन सृष्टास्ते वेदा एनं प्रजापतिं नां धित्वन्नाप्रीणयन् ततः प्रजापतिस्तेभ्यः सारजिघृत्तया तानभ्य पीड़यत्तेभ्यः पीड़ितेभ्यः भूर्भुवस्वरिति व्याहृतित्रय मत्तरत्निसनिरगच्छेत् । तस्य विवरणम् । ऋग्भ्यो ऋग्वेदाद्भूरित्यत्तरत्तव्याहृतिरूपश्च । स सोऽयं भूलोकोभवन् । यजुर्भ्यो यजुर्वेदाद्भुव इत्यत्तरत्त- रसोऽन्तरित्तलोको भवेत् । सामभ्यः सामवेदात् स्वरित्य- त्तरसः स्वर्गोलोको भवेदिति । प्रथमं व्याहृतिहोमं सस्तुतिकं विधत्ते । तद्यदिति । तत्र यदि ऋग्वेदविहि- तात् कर्म्मणः उल्वणं न्यूनमधिकं वा होत्राकं वा होत्रा- दिभिः क्रियेत । तर्त्तर्हि गार्हपत्यमग्निं परेत्य भूः स्वाहे- त्यनया व्याहृत्या जुहुयात् । अयं वै अयमेव भूर्लोको गार्हपत्यं अयमेव लोकऋग्वेदः । तद्देतेनैव होमेन इमं लोकञ्च ऋग्वेदञ्च स्वेन स्वकीयेन रसेन सारेण समर्द्धयति समृद्धं करोतीति । द्वितीयव्याहृतिहोमप्रशंसां विधत्ते अथ यदीति । अथेत्यवान्तरवाक्योपक्रमे यजुष्टो यजुर्वेदवि- हितात् कर्म्मणो यद्युल्वणं न्यूनमधिकं वा अध्वर्य्यादिभिः

क्रियेत तर्हि अन्वाहार्य्यपचनमग्निं परेत्य भुवः स्वाहेति । ब्रह्मा जुहुयात् । अन्तरिक्षलोको वै अन्तरिक्षलोकएवान्वाहार्य्यपचनः अन्तरिक्षलोकएव यजुर्वेदस्तद्वैतेनैव होमेन अन्तरिक्षञ्च यजमानं च स्वेन सारेण समर्द्धयति ॥ तृतीयव्याहृतिहोमं प्रशंसन् विधत्ते अथ यदीति । स्पष्टमेतत् । एवं विशेषेण प्रायश्चित्तं विधायेदानीं साधारणेन प्रदर्शयति अतोवाव इति । अतोवाव अपिवा यतमस्मिन् कर्त्तुमस्मिंश्चित् कर्म्मणि उल्वणं न्यूनमधिकं वा क्रियेत तदा सर्वदेवानु पर्यायक्रमेण जुहुव्याहृतिभिर्ब्रह्मा जुहुयात् । तथाचास्य यजमानस्य यज्ञ अस्कन्नः अन्याकृतो भवति किन्तु स्वर्गाकृतः यथोक्तमार्गेणैव कृतो भवति ॥

हविषा स्कन्दने पात्रादीनाञ्च भेदने प्रायश्चित्तं विधातुमादौ दोषं दर्शयति अधः स्कन्नाद्वेति । अथ पुन स्कन्नाद्धविषः स्कन्नाद्वा भिन्नात् पात्रादीनां भेदाद्वा परस्त्रेधा त्रिःप्रकारेणोत् क्रमति कथं देवान् दिवं यदधिष्ठितन्दिवि लोके चेति तृतीयं गगनं त्रित्वसंख्या पूरकत्वात् । एवमन्यदपि वाक्ये यत्र प्रायश्चित्तं विधत्ते तदभिमृशेदिति देवान् दिवञ्च यज्ञो गादुदगमन् । ततस्त्वत्कारणं मा मान्द्रविणं तद् यज्ञफलं अष्ट आप्नोतु । एवमन्यदपि व्याख्येयम् । देवानित्यारभ्य यत्र क्वच यज्ञो गात्ततो मा द्रविण मष्टित्यन्तेन मन्त्रेण स्कन्नं हविर्भिन्नं पात्रादिकञ्चाभिमृशेत् । तद्वैतेनैवाभिमर्शनेन आत्मानञ्च यजमानञ्च स्वेन रसेन समर्द्धयतीति । यज्ञं हविषा वैष्णवं वारुणंत्र वांपा मुपनयनं प्रायश्चित्तत्वेन विधातुं तदर्थवादत्वेनेदमाम्नायते

वारुणी वा इति वरुणो वै अपाम्पतिः वरुण एव एतल्लिङ्ग-व्यत्ययः एवं विष्णा वुपार्पयति स्थापितवानिति ।

अथ प्रायश्चित्तं विधत्ते यद्यन्न इति । यद्यदि यज्ञे उल्बणं क्रियते तर्हि परोरजसेत्यादिना स्कन्नं हविर्भिन्नमप उदकानि तस्मिन् हविषि उपनिनयेत् पाकवेलायां हविरुद्-गच्छेद्धैतेनैवापां उपनिनयेनात्मानञ्च यजमानञ्च स्वेन स्वेन रसेन समर्द्धयतीति । वरुणेन यज्ञस्य विष्णोः समर्पितत्वात् वैष्णवानां वारुण्यानां वा पात्राणामुपनिनयने कृते यज्ञः समाहितो भवतीत्यर्थः । अस्य मन्त्रस्यायमर्थः । ययोर्विष्णु-वरुणयो रोजसा तेजसा च रजांसि लोकाः स्कभितानि यथावस्थापितानि । किं वयोभिः वीर्यैः तैर्वीरतमा अति-शयेन वीरौ । तथा शविष्ठा शविष्ठौ । अतिशयेन बलवन्तौ । अपि वयोभिः सहोभिरन्यदीयैर्बलैरप्रतीता अप्रतिगतवत्येते ईश्वरौ भवतः यत्पतिरैश्वर्यकर्मापूर्वं हतौ पूर्वं प्रथममाम्ना-तव्यौ विष्णू वरुणावुभयत्र द्विवचनं परस्परसाहित्यापेक्षया विष्णुवरुणावित्यर्थः । अवगन् यज्ञोगमत् । गमेर्लुङि मोनोधातोरिति नकारे कृते रूपं स्वाहा सुष्टु हुत मस्त्विति ॥ ५ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ प्रकाशे
षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे प्रथमाध्याये
पञ्चमः खण्डः ॥ ५ ॥

---

## अथ षष्ठखण्डः ।

विराजोऽतिरिक्ते अनूनतायां प्रायश्चित्तं दर्शयितुमाह—

तद्देति। तदेतद्वक्ष्यमाणं विद्वानाह सम्यगुक्तवान् किल यावद्वा यावत्काले होता ऋचा करोति शस्त्रादिकं पठति तावद्धोतृष्वेव यज्ञस्तिष्ठति यावदेवाध्वर्युर्यजुषा यजुर्वेदविहितं कर्म्म करोति तावदध्वर्युष्वेव यज्ञस्तिष्ठति। यावदुद्गाता साम्ना स्तोत्रादिकं पठति तावदुद्गातृष्वेव यज्ञस्तिष्ठति। यत्र यस्मिन् काले उपरता होत्रादयः कर्म्मरहितास्तिष्ठन्ति तावत् ब्रह्मण्येव यज्ञस्तिष्ठतीति। अस्त्वेवं किं तत इत्यत्राह तस्मादिति। यस्मादेव तस्मात्तस्मिन्नन्तर्द्धौ होत्रादीनां व्यापाराभावकाले ब्रह्मा वाचंयमो बुभूषेदेवेत्यवधारणो भवेदेवेत्यर्थः। एवं वाग्यमनं विधाय तत्रापि प्रायश्चित्त माह। स यदीति यदि ब्रह्मा प्रमत्तः अनवहितः सन् व्याहरेत् मौनं परित्यजेत्तर्हि भूर्भुवः स्वरित्येव वा व्याहृतीर्वा मनसानुद्रवेत् चिन्तयेत्। वा शब्दस्तन्निमित्तं प्रायश्चित्तान्तर माह—वैष्णवीं वर्च मिति। यदि प्रमादाद् ब्रह्मा तदा व्याहरेत्तर्हि इदं विष्णुर्विचक्रम इति वैष्णवीमृचं वा मनसानुद्रवेदित्यनुषङ्गः। अथ सर्वप्रायश्चित्त तया महा व्याहृत्या होमं विधातुं होम मुपक्रमते—राज्ञोहमिति। मितस्य मुष्टिभिः परिमितस्य राज्ञः सोमस्यांऽशून्वयवानादाय मर्कटविषध रइन्द्रः उत्तरत्र मघवन्निति मर्कटस्य सम्बन्ध्यमानत्वाद् वृक्ष मापुप्लुवे उदपतत्। तत्र किमित्यत्राह— स आरुणीति। पश्चात्स आरुणि रुद्दालकः प्रायश्चित्तं कर्त्तुं आहुति मुत्पद्योवाच हे मर्कट त्वमेनानंशसुन् विवप्स्यसीति वा अपथ्यत्वान्मृतः सन् अतो वृक्षादवप्स्यसि। मर्कटस्योत्तरं दर्शयति—सह्रो वाचेति। पुनरारुणेर्वचनं

दर्शयति—प्रायश्चित्तं होष्यामीति। पुनर्मर्कट आह—किमिति। इत्यारुणिरुत्तरमाह—सर्वं प्रायश्चित्तमिति। पुन: मर्कट: पृच्छति—किं सर्वप्रायश्चित्तमिति। इत्यारुणिरुत्तरमाह—महाव्याहृतीरिति। सहोवाचो मारुणेइति। स मर्कट: ओ मित्यङ्गीकृत्यैव मुवाच हैं हे आरुणे आहुतिमान् आहुतियुक्तस्त्वं मर्कटोऽंशूनाद आजहार अत: सर्वप्रायश्चित्तं होष्यामीति यद्ब्रूषे कथमिति तद्विदाञ्च कथं कस्येदं प्रायश्चित्त मिति कथमन्नासीरित्यर्थ:। पुनरारुणि रुत्तर माह—सहोवाचेति। स एव मुवाच यच्च कर्मणो न्यूनत्वम् अधिकत्व मवगतं ज्ञातं यद्यपि चानवगतं तस्य सर्वस्य ज्ञातस्याऽज्ञातस्य विहितविशेषप्रायश्चित्तस्यैषैव महाव्याहृतीरेव प्रायश्चित्तिरिति शास्त्रतोऽवगच्छतीति। अस्तु प्रकृते कि मायात मित्यत्राह तस्मादिति। यस्मादेवं तस्मादेतां महाव्याहृती मेव सर्वप्रायश्चित्तार्थं जुहुयात्। तत्रैव प्रायश्चित्तान्तर माह अपि वेति। अपिवाऽथवा अज्ञात मनवगतं यन्न्यूनत्व मधिकत्वम् यदपिवाऽज्ञातं यज्ञस्य सम्बन्धि मिथ ऋत्त्विग्भि: मिथ: क्रियते। हे अंग्ने अस्य यज्ञस्य सम्बन्धि तदुभयं कल्पय। फलसमर्थं कुरु। हि यस्मात् त्वं यथाकथं कर्मण: स्वरूपं वेत्थ जानासि। स्वाहा सुहुतमस्तु इत्यनेन मन्त्रेण जुहुयात्। अपिवा इति। अपिवा प्राजापत्यां प्रजापत्ये इत्यस्य व्याख्यानं ह्युक्तं नोऽस्माकं तदभीष्ट मस्तु किं तु वयं रयीणां धनानां पतय: स्वाहेति। अनेन मन्त्रेण प्राजापत्यां प्राजापति देवताका माहुतिं जुहुयात्। तद्वैतेनैव आत्मानं च यजमानं च स्वेनाभीष्टेन

रसेन यज्ञफलेन समर्द्धयति समृद्धिं करोतीति। यज्ञेन मृण्मयपात्रभेदने प्रायश्चित्तं दर्शयति—अथ यद्वाविति। अथ पुनश्च यद्वै किञ्च यदपि शरावोदञ्चनादिकं मृण्मयं पात्रं भिद्येत तद्भिन्नं पात्रं भूमिर्भूमिरित्यादिना मन्त्रेणाभिमृशेत्। अस्य मन्त्रस्याय मर्थः—भूमिविकारात्मिका भूमिः प्रकृतिभूतां भूमि मगात् अपि च माता सर्वस्य जगतोनिर्मात्रीं मातारं पृथिवी मेवागात् द्यौः पिता पृथिवी मातेति श्रुतेः वयं पुत्रैः पशुभिश्च समृद्धा भूयाम भूयास्म शत्रुरस्मान् द्वेष्टि स भिद्यतां विदीर्य्यता मिति तद्वैतेनैव तदभिमर्शनेन आत्मानं च यजमानं च स्वेन रसेन समर्द्धयति ॥ ६ ॥

इति श्रीसायणाचार्य्ये विरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे प्रथमाध्याये षष्ठः खण्डः ॥ ६ ॥

---

## अथ सप्तमखण्डः ।

अर्थवादपुरःसरं सौम्यं चरुं विधत्ते—घ्नन्तीव वा इति। राजानं दीप्यमानं ओषध्यधिपतिं वा सोमं घ्नन्तीव हिंसतीव। स च सोमस्तेन प्रमीयत इव भवति। यद्यस्मा देवं सोमं तदभिषुण्वन्तीति तस्याभिषुतस्य मृतप्रायस्य सोमस्य एतां प्रसिद्धाम् अनुस्तरणीं मृतस्यानुस्तरणीन्तां कुर्वन्तीति यद्यस्मात् सौम्यं सोमदेवत्यं चरुन्निर्वपन्ति तस्मादत एव लोके पुरुषाय सर्वस्मै मृतायानुस्तरणी क्रियते।

वैतरणी नद्युत्तारिका गौः दीयते। अतः सोमाभिषवनिमित्तं सौम्यं चरुं निर्वपेदित्यर्थः। तथा चाध्वर्य्युशाखाया माम्नायते—घ्नन्तीव वा तं सोमं यदभिषुण्वन्ति यत्सौम्यो भवति यथा मृतायानुस्तरणीं घ्नन्ति तादृगेव तदुत्तरार्द्धे वा मध्ये वा जुहुयाद्देवाभ्यां समं दद्यात् दक्षिणार्द्धे जुहोतीत्यादि। हुतशिष्टे पात्रस्थिते सौम्ये चरावाज्यं पूरयित्वोद्वेक्षणमर्थवादेन विधत्ते साध्यानामिति। पुरा सत्रं बहुकर्त्तृकं द्वादशादिबहुदिनसाध्यं यागमासीतानामनुतिष्ठति साध्यानामितन्नामकानां देवानामक्षसु चक्षुःषु केशराशिकता जज्ञिरे ते देवा इन्द्रमुपनिषेदुः दुरपगमन् गत्वा चैवमवोचन्। तेषां सत्रमासीनानामस्माकं चक्षुःषु शर्करा कथं जायेरन्। हे इन्द्रचक्षुःषूत्पन्नाः शर्कराः विद्याः जानीष्व। इत्येवं पृष्टमात्रस्तत्परिहार यातेभ्यो देवेभ्यः सौम्ये चरावेतत् प्रसिद्धं श्यावं मा हृद्रमाजरं प्रायच्छत्। ततस्तदाज्यमवेक्ष्यन्त। तदवेक्षणेन ते देवाः प्राश्नन् तेषां चक्षुंष्यायतत शर्कराण्यभूवन्नित्यर्थः। कश्चित् पुमानेवं विद्वान् जानन् सौम्यं चरुमाज्यं पुनरवेक्षत इत्यर्थः। अत्र विशेषो बह्वृचब्राह्मणे श्रूयते। प्रतिगृह्य सौम्यं होता पूर्वं छन्दोगेभ्योऽवेक्षेत हैके पूर्वार्द्धं छन्दोगेभ्यो हरति तत्तथा न कुर्य्याद्वषट्कर्त्ता प्रथमः सर्वभक्षान् भक्षयतीति ह स्माह। तेनैव रूपेण तस्माद्वषट्कर्त्तैव पूर्वमवेक्ष्येताथैनं छन्दोगेभ्यो हरतीति प्रशंसापूर्वकं सेतिकर्त्तव्यताकं सौम्यं चरुं पायनं विधत्ते योलमन्नाद्यायेति। यः पुमानन्नाद्याय अन्नादिभक्षणायालं समर्थः सन्नपि अथ शब्दः अप्यर्थे। अन्नं नाद्याद्वालि-

शरीत्या स पुमान् सदृशो दक्षिणार्थं द्विजातिगम्यत्वादेव होमविशेषहुतशिष्टं सौम्यं चरुं प्राश्नीयात् उद्गाता। तस्माद् भक्षणादन्नाद्यं तं जनं क्रामति प्राप्नोति यो जनो अन्नाद्याय समर्थः सन्नपि अन्नं नास्ति किञ्च अस्मात् प्राशनात्पितरोऽपि तृप्ता भवन्तीति शेषः अतो जन्येन जनहितेनान्नेन भक्षणात्सौम्येनैवान्नमत्ति अदनादन सामर्थ्येनैवान्नमत्तीत्यर्थः। न केवलमिहलोके किन्तु परत्राप्यन्नादो भवतीति ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे प्रथमाध्याये सप्तमः खण्डः ॥ ७ ॥

॥ इति प्रथमः प्रपाठकः ॥ १ ॥

# अथ द्वितीयः प्रपाठकः ।

## प्रथमः खण्डः ।

अथाग्निमे वहिष्पवमाने धर्म्माः कथ्यन्ते । तत्र तावदुपास्मै गायतानर इत्येतामाद्या मृचं साम्ना प्रच्छन्नां गायेदिति प्रशंसापूर्वकं विधत्ते प्रजापतिरकामयतेति । प्रजापतिर्विधाता पुरैवमकामयत बहुस्यां स्थावरजङ्गमत्वेन नानाविधोऽहं भवेयं तस्यैव विवरणं प्रजायेयेति । य एवं कामयित्वा रेतस्यां रेतस्या प्रथमाधूस्तदन्नं याद्टगपि रेतस्या । तामुपास्मै गायतेत्येतामृचं साम्ना प्रच्छन्नां व्याम् अगायत् । यदि कश्चिदृचमसाम्नी सामरहितामगास्यत्तर्हि अनस्थिकं अस्थिरहितं मां समजनिष्यत । तत् साम निराधारमजनिष्यत तत् साम निराधार अजनिष्यतेत्यर्थः तस्माद् यामृचं साम्ना प्रच्छन्नां गायति गायेदित्यर्थः । यस्मादेवं तस्माल्लोके पुरुषो मांसेन त्वचा लोम्ना च प्रच्छन्नं सन्नजायत इति रेतस्यापाल्विः ग्रहणं विधत्ते त्रिरुद्ग्टह्लातीति । पवमानायेन्दव इत्यत्र यकारवकारवाकारेषु त्रिषु अक्षरेषु प्रत्येकं प्लुतं कुर्य्यादित्यर्थः । तथाच ब्राह्मणः रेतस्यायास्त्रिरुद्ग्टह्लातीति ब्राह्मणं भवतीति पा३वा३मानायेन्दवा३ इति । तत् प्रशंसति त्रय इमे लोका इति इमे प्रसिद्धाः पृथिव्यन्तरिक्षद्युलोकास्त्रयः एषां लोकानामवरुध्ये प्राप्त्यर्थं त्रिरुद्ग्टह्लीयात् यत एव च त्रिभ्यो रेतः

सिच्यते। तत्रत्यं हिङ्कारं निषेधति न हिं कुर्य्या-दिति। हिङ्कारनिन्दया तद्वर्जनं प्रशंसति वज्रो वै इति। निगदसिद्ध मेतत्। नियमान्तर माह रेतस्या इति। रेतस्या प्रथमा ऋक् छन्दसा गायत्री देवतया प्राजापत्या प्रजापतिना गीतत्वादित्येवं सर्वं धारयन्नेतया रेतस्या गायेत्। हि यस्मादिदं सर्वं रेतः। तथा च श्रूयते प्रजापते रेतोदा देवानां रेतो वर्षाः वर्षस्य रेत ओषधय इत्यादि। रेतस्यायाः सेतिकर्त्तव्यताकं गानं विधायेदानीं द्वितीयाया मभिते मधुना पय इत्यस्यां गानं विधत्ते। द्वितीयायां गायतीति गायेदित्यर्थः। तत्र विशेष माह तस्मादिति। तस्या ऋचि द्वे अक्षरे समयनी व्यतिषजति व्यतिषक्ते कुर्यात्। ते के अक्षरे इत्यत उक्तम् मध्यमस्य पदस्याथर्वाणो अग्निअयुरिति। अस्य पादस्यो-त्तममन्त्यमक्षरमुत्तमस्य देवं देवाय देवयुमिति अस्य च प्रथमं मयक्षरं तथा च द्राह्यायणेन गानमे व्यतिषङ्गं दर्शितवान् आथर्वाणो अग्निआदे३ पूर्वं देवायदा इति एतत् प्रशंसति व्यतिषक्ताविति। स्पष्टार्थः। गाने नियमं दर्शयति गायत्रीच्छन्दसेति। छन्दसा गायत्री देवतया आग्नेयी। अत्यधिष्ठानरूपां पृथिवीं ध्यायन्नेतया गाये-दिति। अथ सनः पवस्वशंगव इत्यत्र तृतीयायां गानं विधत्ते तृतीयां गायतीति। गाने विशेषमाह—तां बल-वदिवोरसेव गायतीति। ता मृचं बलदिव प्रयच्छत्त-दिव। उरःस्थानेनैवोद्गायेदित्यर्थः। विशेषमाह तस्या इति। तस्या ऋच उत्तमार्द्धे द्वे अक्षरे द्योतयतीति

ब्राह्मणं भवति ये ऊर्द्धं हिङ्कारात्ते निर्ब्रूयादिति गौतमः षाधाइति धानञ्जय्य इति। हिंकारादूर्द्धं यदक्षरं निरुक्तं गेयमिति गौतमस्य मतं हिङ्कारात् पूर्व्वं षाधा इत्यक्षरद्वयं निरुक्तं गेयमिति तत् प्रशंसति चक्षुरिति। तत्तेन अक्षर-द्वयद्योतनेन चक्षुरेव प्राणत्वेन युनक्ति। तस्मात्तत एव चक्षुर्युक्तं सम्बन्धमेव भवति अत्रापि गाने भिद्यमाह— त्रिष्टुप्छन्दसेति। पूर्ववद्व्याख्येयम्। अथ दविद्युतत्या रुचेत्यस्यां गानं विधत्ते चतुर्थीं गायतीति। अत्र विशेष-माह—तस्याश्चत्वारीति। विरम्य गायेदित्यर्थः। ततः स्तौति द्वादशाक्षरपदेति। तदेतदनूद्य मतभेदेन व्याचष्टे सूत्रकारः। तस्याश्च त्वायुक्तमार्द्धेऽक्षराणि द्योतयतीति ब्राह्मणो भवति द्विपुरस्ताद्धिङ्कारात्तथोपरिष्टादिति गौतमः सोमाः शुक्राइति धानञ्जय्यइति स्पष्टार्थः। तत् प्रशंसति श्रोत्र मेवेति। तत्तेनाक्षरचतुष्टयद्योतनेन श्रोत्र मेव प्राणत्वेन युनक्ति। तस्मात्तत एव श्रोत्रत्वं युक्ताक्षतुष्टय संख्यया। कथं द्वे श्रोत्रे उपाधिभेदेन तथा प्रतिश्रवणे प्रतिध्वनि इत्येव मतः तस्मात्पुरुषः सर्वा दिशः शृणोति। सर्वासु दिक्षु वर्त्तमानशब्दान् शृणोतीत्यर्थः। तस्यैव विवरणं परागपि यदगच्छत् प्रत्यङ्शब्दान्नपि सर्वतः शृणोति। गाने नियम माह जगतीच्छन्दसेति। हिन्वानो हे त्वभिरित्यस्यां गानं विधत्ते पञ्चमीमिति। वचनाच्चतु-रवनर्द्दीपञ्चमी कार्या हिङ्कारादूर्द्धम् एकः चयः पूर्वे अवन-र्द्दीस्तत्र पूर्वेषु त्रिष्वप्यवमर्द्देष्वन्त्यक्षरं निनर्द्देदित्यर्थः। तत् प्रशंसति आह बहुतमादिति। य एवं विनर्द्दङ्गायति स

बहुतमापुरुषाबहुसन्ततिपर्य्यन्त मन्न मत्तीत्यर्थः किञ्च य एवं वेद सोऽपि अन्नादो भवति। तत्रैव विशेषोत्तर माह। निरुक्ताश्चेति। ता ऋचन्निरुक्ताश्च गायेत् अय-मर्थः। तस्य चत्वारो गीयते। अवनर्द्दाः तान्निनर्द्दयन् क्रमेण निरुक्त मनिरुक्तमिव व्यत्यासङ्गायेदिति। तथा च द्राह्यायणः—तस्याः द्वितीयं पादं निर्ब्रूयात्तृतीये चाक्षरे पञ्चम षष्ठे इत्यस्यार्थः। अस्या द्वितीयं पादं निरुक्तं गायेत् तृतीये पादे प्रथमं चतुरक्षर मनिरुक्तम्। पुनः पञ्चमषष्ठे निरुक्ते गायेत्। हिङ्कारादूर्द्ध्वं पुनरप्यनिरुक्त मित्येवं व्यत्या-समिति तत्प्रशंसति निरुक्तेन वै इति। अस्या ऋचि निरु-क्तत्वेनैव अचत्योक्तं निरुपन्ने निरुत्पन्नैः वाक्यालम्बनं भजते किञ्च अस्या निरुक्तं तत् कार्य्य मुपजीवन्ति यस्यैवं वेद सोऽपि वाचं भुंक्ते य एना मुपजीवति च। अत्र नियम माह अनुष्टुप्छन्दसा इति। एषां छन्दसा मनुष्टुप्छन्द-श्चतुष्टं भूतभविष्यद् वर्त्तमानस्य पादचतुष्ट मिति चतुष्टसा-म्यादेव तया प्राजापत्या सर्व मेवम्ध्यायन् गायेत्। हि यस्मादिदं जगत् प्राजापत्यं प्रजापतिसम्बन्धीति। अथ ऋधक् सोमस्वस्तय इति। अस्यां गानं विधत्ते षष्ठीं गायन्ति। अत्र विशेषं दर्शयति—तस्मात् द्वे द्वे अक्षरे षड़क्षरपर्य्यन्तम् उदासं गायेत्। तदेव मतभेदेन दर्शितवान् सूत्रकारः सञ्जग्मानोदायिवा कावा३ इति धानञ्जय्यः। कवा३ इति शाण्डिल्य इति तदक्षरसंख्यां गायति। तत् प्रशंसति षडृतव इति। षट्स्वेवं वसन्तादिषु सर्वं प्रतिति-ष्ठति। ऋतौ ए विभिन्नस्य कालस्य सर्वोत्पत्तिमन्निमित्तका-

रणत्वात्। अत्रापि नियम माह पङ्क्तिच्छन्दसा इति। पूर्ववद् व्याख्येयम्। एवं सर्वास्वृत्तु गानं विधाय किञ्चित्तदनुद्य फलदर्शनेन स्तौति इहैव च वा इति। गायत्रीच्छन्दोयुक्ते प्रातःसवने त्रिष्टुभं तृतीया मृचं गायति जगतीं चतुर्थीं गायति अनुष्टुभं पञ्चमीं गायति षष्ठीं पङ्क्तिं गायति। एवं सोम मिहैव चकारात्परत्रापि त्रिरुक्ति रादरार्था। मनसा गच्छति। सङ्कल्पेनाभीष्टानि प्राप्नोति इत्यर्थः। गायत्रे गानं दर्शयति गायत्रे हे गायतीति। तत् फलं दर्शयति प्राणमेवेति। तत्तेन द्वयोर्गानेन प्राण मेवाप्येति। हि यस्माद्गायत्रं यथा कालवङ्गत्वात् वहिष्पवमानेपि विशेषान्तरं विधत्ते रथन्तरेति। उत्तरा मृचं रथन्तरवर्णान्तां गायेत्। अत्र विशेष माह द्राह्यायणः—तस्या ऊर्द्धं प्रस्तावाच्चत्वार्य्यक्षराण्यभिष्टोभेदिति। तस्यायमर्थः। तस्या रथन्तरवर्णोत्तमात् प्रस्तावादूर्द्ध मुद्गीथस्यादितश्चतुरक्षरं रथन्तरवद्धकारैरभिष्टोभेदिति। तत् प्रशंसन्ति इयं वै इति। इयमेव ऋक् रथन्तरं तद्रूपकत्वात्। किञ्च अस्या मेव ऋचि सामनि च प्रतितिष्ठतीति यद्वा अस्यां गीयमानाया मेवं यजमानः प्रतितिष्ठतीति। यज्ञफलं भवेदिति।

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे

षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे द्वितीयप्रपाठके

प्रथमः खण्डः॥ १ ॥

---

## अथ द्वितीयखण्डः ।

अथैतास्वृक्षु विधास्यमानेन वहिष्पवमाने सामानुलोम्यं विधत्ते—ता वा एता इति । समर्था भवन्ति । यद्येनं पराच्य मानुलोम्येन गीयन्त इत्यर्थः । आज्यस्तोत्रेषु तासां प्रातिलोम्यं विधत्ते—प्रतीच्यइति । येन प्रतीच्यः प्रत्यङ्मुखाः प्रतिलोम्ययुक्ता भवन्ति तेन मनुष्यलोकाय युज्यते देवलोकापेक्षया मनुष्यलोकस्य प्रत्यग्भूतत्वात् । प्रशंसापूर्वं धूर्गानं विधत्ते—एष वा वजात इति । तस्य वहिष्पवमानस्य सम्बन्धिन्यो धुरो येन गीयन्ते गायत्री गीतिरेव केवलविकारा धुरः । यद्योगाहचोपि धुर इत्युच्यन्ते । एष वाव अय मेव जातः जन्म फलवान् । एष वाव अवलुप्तजरायुः । जरायुर्गर्भवेष्टनं तद्रहितः अज्ञानरहित इत्यर्थः । अत एव आर्त्विजीनः ऋत्विक्कर्मार्हः यः एवं विद्वान् जानन्धुरो गायति तं जानन्नेवेन मन्नाद्याय परिवृणक्त्येव उद्गातारमेवान्नभक्षणाय समर्थं करोतीत्यर्थः । किञ्च उभावन्नमत्त उद्गाता यजमानश्चोभावन्नमत्तः । तत्र प्रथमगाने विशेषणमाह या प्रथमा इति । तत्र या प्रथमा धूः ता मन्नाद्यं भूयादिति ध्यायन् गायेत् । तत्प्रशंसति रेतस्य इति तत्तेन ध्यान पूर्वकेण गानेन ऋक्तः सिक्ताय सेकाचैव प्रजोत्पत्तिमेवेत्यर्थः । अन्नाद्यं प्रति दधाति । धारयतीति । तत्त्वं हिङ्कारं प्रतिषेधति न हिं कुर्य्यादिति । हिङ्कारनिन्दया तद्वर्जनं प्रशंसति यद्धिङ्कुर्य्यादिति । व्याख्यात मेतत् । तस्या छन्दो रेतस्या दर्शयति रेतस्या इति । छन्दोरेतस्या प्रथमा गायत्री युज्यते मनश्च प्रजापतिना प्राणत्वे न धीयते ॥

अथ द्वितीयस्या ऋचि गाने विशेष माह—या द्वितीया इति तस्य या द्वितीया तमागां गायत्वेन प्राप्ता गायत्री गायत उद्गाता तस्या ऋचो द्वे अक्षरे संशयनो व्यतिषजति। कथं मध्यमस्य पदस्योत्तम मक्षर मुक्तम्। अस्य पादं प्रथम अथर्वाणो अग्निग्ययुर्देवं देवाय देवयुरिति। अन्यत् पूर्ववत्। या तृतीया ता मिति। या त्रिष्टुभं गायन् तस्यान्तिमा-र्द्धे हिङ्काराद्दूर्द्ध्वं वा द्वे अक्षरे द्योतयति निरुक्तं गायेदि-त्यर्थः स्पष्टमन्यत्। चतुर्थ्यां विशेषं दर्शयति—या चतुर्थी तां जगती मगान् गायऽंस्तस्या चत्वार्युत्तमार्द्धेऽक्षराणि द्योतयति श्रोत्र मेव तद् युनक्ति। जगतीं गायन् तस्या द्वे उत्तमार्द्धे चत्वारि अक्षराणि हिङ्कारात् पूर्वं द्वे उपरि-ष्टाद् द्वे अक्षरे इति चत्वारि सोमाः शुक्रादृति वा चत्वार्य्य-क्षराणि द्योतयति। अन्यद्व्याख्यातं पूर्वखण्डे। अभिहि-तस्यार्थस्यात्राभिधाने न पुनरुक्तिदोषः। विशेषान्तरविधा-नायानूद्यमानत्वात् पञ्चम्यां विशेष माह—या पञ्चमी ता मिति। या पञ्चमी तां गायन् चतुर्द्धा व्यावृत्त्य चतुरवनर्द्दीं कृत्वा गायेत्। यत एव लोके इदं प्रसिद्धं पुरुषश्चतुर्द्धा पादमध्यहस्तशिरोरूपैश्चतुर्भिर्भागैः विकृतः सन्वीर्य्याय जायते समर्थो भवति तत एवैना मनुष्टुभ मृचं चतुर्द्धा व्यावृत्त्य वीर्य्याय खेलार्थ मेव गायति। किञ्च उच्चावचा-मिव एता ऋचम् अंशभेदेन निरुक्ता मनिरुक्ता मिव गायेत्। हि यस्मात् वागुच्चावचा मिव व्यवहाराय भवति। अपि च संक्ष्णत्येव क्ष्णतजने निमित्तमेव गायेत्। हि यस्मात् पुरुषो लोके संक्ष्णत्येव विस्पष्टमेव यथा भवति तथा वाचं

वदति किं चात्रानुष्टुप् छन्दो युज्यते वाक्प्राणत्वेन धीयते । प्रजापतिनेति शेषः ।

अथ षष्ठ्या विशेषं दर्शयति या षष्ठी तामिति अत्र पङ्क्तिच्छन्दा युज्यते एषा ऋक् छन्दः पङ्क्तिः सा ज्ञेयेत्यर्थः समानो दानौ प्राणत्वेन धीयते । शिष्टं व्याख्यातमिति ।

अथ वहिष्पवमाने धुरो विधानानि कथ्यन्ते सदिति । इति प्रथमायां धुरः सदिति निधनं कुर्य्यात् । हि यस्माद्रेतसोपि हिषि शब्दः सप्तम्यर्थः द्योतनार्थः रेतसि स द्रवेण ज्ञायते । द्वितीयायां निधनं दर्शयति समिति । समिति निधनं द्वितीयस्या कुर्य्यात् । यद्यस्माद्रेतसो विश्वस्य सम्भव इत्यर्थः । तृतीयायां निधनं दर्शयति स्वरिति । स्वरिति तृतीयाया निधनं कुर्य्यात् । तेन स्वर्गं लोकं प्रजानाति । चतुर्थ्यां निधन माह इडेति चतुर्थ्यां इति । इडेति चतुर्थ्यां निधनं कुर्य्यात् पशवः खलु इडा भोग्यत्वात् तेन पशुष्वेव प्रतितिष्ठति पशुमान् भवतीत्यर्थः । पञ्चम्या निधनं विधत्ते ---वागिति । पञ्चम्या ऋचो वागिति निधनं कुर्य्यात् तेनास्मिन्निधनस्य कर्त्तरि सर्वाः प्रजाः पुण्याः स्वाभिरूपा वाचो वदन्ति यथोक्तस्य वेदितारं प्रशंसति---य एवं वेदेति । यः पुमानेवं निधनानि वेद सोऽपि यथोक्तफलं लभत इति शेषः ।

अथ तास्वेव धर्म्मान्तराणि कथ्यन्ते । तत्र प्रथमायां तद्विशेषमाह—या प्रथमा तामिति । प्रथमा मायच्छन् प्लुतोच्चारणेन विधारयन्निव गायेत् । हि यस्मादयं प्रसिद्धोऽवाङ् प्राण अयत इव भवति । द्वितीयायां धर्म्मान्तरं

विधत्ते या द्वितीया तामिति। घोषिणः घोषवतीमिव गायेत्। स्पष्ट मन्यत्। तृतीयायां धर्म्मान्तरं विधत्ते— या तृतीया तामिति। उद्यच्छन्ति वोढुं गमयतीव व्याख्यातप्राय मन्यत्। चतुर्थ्यां धर्म्मान्तरमाह—या चतुर्थी तामिति। व्याख्याततर मेतत्। पञ्चम्यां धर्म्मान्तरमाह— या पञ्चमी तामिति। अंशभेदेन क्वचिन्निरुक्तं क्वचिदनिरुक्त मिव गायेत् हि यस्मादयं समानः प्राणो निरुक्ताऽनिरुक्ता-निरुक्तमिव क्वचित् स्पष्टः। क्वचित् स्पष्ट इव शरीरे वर्त्तते। षष्ठ्यां धर्म्मान्तरमाह—या षष्ठी तामिति। उत्तमा मृचं रथन्तरवर्णां रथन्तरस्येव वर्त्तमानचतुष्टयोपेतायेत्यर्थः। एतत्सर्वं व्याख्यातमिति नात्र पुनरुक्तिः शङ्कनीया पूर्वख-ण्डविवरणरूपत्वादस्य खण्डस्येति ॥ २ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे
षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे द्वितीयप्रपाठके
द्वितीयः खण्डः ॥ २ ॥

---

## अथ तृतीयखण्डः।

आख्यायिकाधुरः प्रशंसितु मुपक्रमते—देवाश्च वा असुराश्चेति। पुरा देवाश्चासुराश्च एषु पृथिव्या लोकेषु विषयेषु अस्पर्द्धन्त तत्र तैः असुरेभ्यः स्पर्द्धमाना इन्द्रादयो देवाः प्रजापतिं मुपाधावन् ततः किमित्यत्राह—तेभ्यः एतामिति। स प्रजापतिस्तेभ्य एतान्वक्ष्यमाणां धुरः। धूरात्मकान् प्रायच्छत्। तद्विशिनष्टि—प्रथमं मनः अथा-

नन्तरं प्राणः ततश्चक्षुः अथ श्रोत्रम् अथ वाचमिति। ततोऽपि किमित्यत्राह—ताभ्य इति। तेभ्यो मनआदिरूपेभ्यो धूर्भ्यः पुरुषं पशूंश्च निरमिमीत उत्पादितवान्। अस्त्वेवं किन्तत इत्यत्राह—तेन पुरुषेणेति। तेन धूर्भ्यो निर्निमित्तेन पुरुषेण देवा असुरानधूर्वन् अवधिषुर्यद्यस्मादधूर्वन्नतो धुरां धूस्त्व मभूत् यत एवमुक्तरीत्या धुरः स्वरूपं वेद भ्रातृव्यं शत्रुरूपं पाप्मानं धूर्वति हिनस्तीति। पुनरपि प्रकारान्तरेण धुरः प्रशंसति—यो वै धुरामिति। यः खलु धुरां यथोक्तां धूस्त्वं वेद स भ्रातृव्याच्छत्रोः सकाशादाहृतया धुराः अनेकधनभारैर्वसीयान् अतिशयेन वसुमान् भवति किञ्च॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे द्वितीयप्रपाठक तृतीयः खण्डः ॥ ३ ॥

---

## अथ चतुर्थखण्डः।

प्राञ्चमग्निमिति। यस्मादग्निरुन्नेतारः शालामुखीयादुत्तरवेद्यां प्रति प्राञ्चमग्नि मुन्नयन्ति तस्माद्धोता प्राङ्ङासीनः प्राङ्मुख उपविष्टोऽन्वाह अनुब्रूहि तं प्रेष मनुवचनं कुर्य्यात्तथा प्राङ्ङासीनो यजति याज्यां पठेत्। प्राङ्ङासीनः शंसति शंसनं पठति। धर्म्मान्तरमाह—असावादित्य इति। धर्म्मान्तरं दर्शयति अथैष चन्द्रमा इति॥

अथ शब्दोऽवयवोपक्रमे। यत एवं चन्द्रमा दक्षिणेन पथा एति गच्छति तस्माद्ब्राह्मणं दक्षिणतो दक्षिणदिग्भागे आसयन्ति उपवेशयन्ति। अन्यत् धर्मं दर्शयति अथैतस्या मिति। अत्यधिकं पर्जन्यो विद्योतते विशेषेण स्वं मूर्त्तिमान् प्रकटयति। तस्मादुद्गाता एतामुदीचीन्दिशं प्रति उदङ्मुखः सन् उद्गायति। धर्मान्तरं विधत्ते—अथैष इति। भूतानां पृथिव्यादीनां मध्ये एष व्याप्त आकाशः सन्नवहितो भवति। तस्मात् सदसो मध्ये सदस्यं सप्तदशमृत्विजमासं जयति। धर्मान्तरं विधत्ते—उच्चावचा वा इति अत आप उच्चावचा न्यूनाधिकभावेन वर्त्तते। उतापि च ता आपो गाधाः क्वचिदपगतप्रतिष्ठा इव भवन्त्यत एव गम्भीरादस्मा-द्गोत्राशꣳसिनः। उतापि च ता आपो गम्भीरा अगाधा इव भवन्ति। तस्माद्गोत्राशꣳसिनोपि पञ्चर्चेन शस्त्रेण स्तुतिं कुर्वन्ति। उतापि च भूयसा बह्वीभिः ऋत्वभिः साध्येन शस्त्रेण स्तुतिं कुर्वन्ति। धर्मान्तरं विधत्ते आदित्यस्यैवेति ॥२

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे द्वितीयप्रपाठके चतुर्थः खण्डः ॥ २ ॥

---

## अथ पञ्चमखण्डः।

अथ चमसभक्षणेऽस्योपह्वाः कथ्यन्ते। तत्र प्रथमं प्रातः सवनसम्बन्धिन उपह्वां दर्शयति स प्रातः सवनेति। स चमसस्य भक्षयिता प्रातःसवने सवनमुखीयेषु चमसेषु

चमसाध्वर्युभिराहूतेषु तद्दच मनुज्ञातु मिच्छते इच्छेत्। कथमित्याशङ्क्य तत्र प्रथमं होतृविषयोपहवप्रकारं दर्शयति अग्निर्मेहोतेति। मे ममाग्निरेव होता मनुष्यात्मको होता समुपह्वतयाम् अनुजानातु इत्युपाꣳशूच्चार्य्य होत उपमाह्वयस्वाऽनुजानीहि इति तत्र भाग मुच्चैरुच्चारयेत्। अध्वर्युविषयोपहवप्रकारं दर्शयति आदित्योमिति। मम आदित्यएवाध्वर्युः स मा मुपह्वयस्व स मा मित्युपांशूचार्य्य। उपमाह्वयस्वेति। मन्त्रभागमुच्चैरुच्चारयेदिति। ब्रह्मविषयं तत्प्रकारं दर्शयति चन्द्रमा मे इति। मे मम चन्द्रमा इत्येव ब्रह्मा शिष्टं पूर्ववत्। उद्गातृविषयन्तत् प्रकारं दर्शयति---पर्जन्योमइति। एतदतिरोहितार्थंचमसाध्वर्य्युविषयोपहवप्रकारं दर्शयति---रश्मयो मे इति। रश्मयआदित्यस्य किरणाः एव मेव चमसाध्वर्य्यवः। अन्यत् स्पष्टम्। यद्यदि होत्राशंसिनश्चमसाध्वर्य्यवः। चमसभाजिनो न सन्ति तथापि तदनुज्ञा लब्धव्येति नियमार्थन्तत् प्रकारप्रदर्शनमिति। अग्निर्मे होतेत्यादयो मन्त्रास्ते याजमानाः तथा चानुकल्पे दर्शितम्। प्रथमः सवनमुखीयोग्निर्मे होतेति याजमानमिति। यथोक्तं होत्राद्युपहवप्रकारं प्रशंसति---तावा एताइति। तावा एता अग्न्याद्या देवता एव ऋत्विजां सम्बन्धिभिरुपहवरूपाभिर्वाग्भिरुपह्वयन्ते अनुज्ञायते। ततः किमित्यत्राह---स उपहूतो इति। पश्चात्तु उपहूते होत्रादिभिरनुज्ञातः सन् स चमसं भक्षयति। यथोक्तमनुज्ञानं प्रशंसति---प्राणो यजमानइति। यजमानः प्राणः प्राणमुख्यत्त्वसाम्यात्। अथो अपि च

यत्र एतासामग्न्यादीनां लोकः । तत्र होत्रादिभिरग्न्यादिरूपैरुपहूतो यजमानोऽनुज्ञातो भवतीति ॥ ४ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणे द्वितीयब्राह्मणे द्वितीयप्रपाठके पञ्चमः खण्डः ॥ ५ ॥

---

## अथ षष्ठखण्डः ।

अथ माध्यन्दिनसवनसम्बन्धिन उपह्वान् दर्शयति—स माध्यन्दिनेति । पूर्ववद्व्याख्येयम् । कथमित्याशङ्क्य तत्र कथं-होत्रादि । विषयोपह्वप्रकारं दर्शयति—वाङ्मेहोतेति । मे मम वाक् होता मन्त्रोच्चारणरूपा वाचस्तत्कार्य्यत्वाच्चक्षुरेवाध्वर्युस्तत्पूर्व्वकत्वात् सर्वं व्याख्याताङ्गकर्म्मणः मन एव ब्रह्मा यथा प्राणानां मध्ये मनोऽर्द्धभाक् तथा ब्रह्मा ऋत्विजाम् अर्द्धभाक् । तथा चैतरेयक ब्राह्मणे "तस्माद्ब्रह्मार्द्धभाक् प्रवो एव इतरेषामृत्विजामिति । श्रोत्रं मे उद्गाता गीतिप्रतीतिसाम्यात् । अन्यत् पूर्ववद्व्याख्येयम् । अथ सदस्यादिविषयमुपह्वप्रकारं दर्शयति । योऽयमन्तरिति । अन्तश्चक्षुषि चक्षुषोर्मध्ये योऽयमाकाशः स एव मे सदस्यः । अन्तश्चक्षुषि या इमाः परिदृश्यमानाः । त एव होत्राशंसिनः । मे ममाङ्गान्येव चमसाध्वर्य्यवः उपकरणसाम्यात् । अन्यत् पूर्व्ववद्व्याख्येयम् । वाङ्मे होतेत्यादयोऽपि मन्त्रायाजमानाः । तथा चानुकल्पः "वाङ्मे होतेति याजमानमिति । यथोक्तमुपह्वरूपाभिर्वाग्भिरुपह्वयन्तः किं कुर्य्या-

दित्याह—स उपहूत इति । पश्चात् स उपहूतो होत्रादिभिरनुज्ञातः सन्नेव भक्षयति यथोक्तमन्यत्तानं प्रशंसति—अपानो यजमान इति । यजमान अपानाख्यप्राणरूप अन्यत् समानम् ॥ ५ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे द्वितीयप्रपाठके षष्ठः खण्डः ॥ ६ ॥

---

## अथ सप्तमखण्डः ।

अथ तृतीयसवनसम्बन्धिन उपहवान् दर्शयति—स तृतीयसवने इति । पूर्ववद्व्याख्येयम् । कथमित्याशङ्क्य प्रथमं होत्रादिविषयोपहवप्रकारं दर्शयति—प्राणो मे इति । प्राणादय एव होत्रादय इत्येतावान् विशेषः समानमन्यत् । सदस्यादिविषयं तत्प्रकारं दर्शयति—योऽयमन्तःपुरुष इति । अन्तःपुरुषो देहस्य मध्ये योऽयमाकाशः त इत्याकाशमात्मा स एव मे सदस्यः। अन्तः पुरुषे इमाः प्रसिद्धाः आपः त एव होत्राशंसिनः । देवहर्त्तीनि लोमानि एव मम चमसाध्वर्य्यवः उपाङ्गत्वसाम्यात् समानमन्यत् । एते प्राणादयो मे होतेत्यादयोऽपि मन्त्रा याजमानाः तथाच अनुकल्पः "प्राणो मे होतेति याजमानमिति । यथोक्तं स्तौति ता वा एता इति । पूर्ववत्तत्र कुर्य्यादिह स उपहूत इति । स उपहूतः सवने चमसं भक्षयतीत्यर्थः । यथोक्तमनुज्ञानं प्रशंसति—स उदान इति । यजमानः स उदानाख्यमप्राण-

रूपः । शेषं पूर्ववत् व्याख्येयम् । सर्वेषां वै इति । वषट्कर्त्ता होता सर्वेषामेव ऋत्विजां चमसम्भक्षयेत् न स्वस्यैव चमसमित्यर्थः । किं वषट्कर्त्तोद्गातृचमसमपि भक्षयेत् । नेत्याह--देवानां वा इति । देवानामेव यज्ञस्यैतत् मुखं यदुद्गातृचमसान्तःस्थितं सोमात्मकं यत एव तस्मादुद्गातृचमसान्यो वषट्कर्त्ता न भक्षयेत् । अथ उक्तार्थस्य वेदितारं प्रशंसति--एवं विदुषो ह इति । एवमुक्तप्रकारेण विदुषो यजमानस्य यज्ञो न व्यथते व्यथारहितो अदुष्ट एव भवतीत्यर्थः । किञ्चैवं विदुषो यजमानस्येष्टमभिलषितं स्वर्ग्यं यागफलभूतस्वर्गफलहितं भवति । अपिच, अथो यथोक्तादङ्गजाताद्यन्ने एवं विद्वान् हीनं कुर्य्यात् सोऽपि यज्ञं सम्पूर्णमेव कृतवान् भवतीत्यर्थः ॥ ६ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे द्वितीयप्रपाठके

सप्तमः खण्डः ॥ ७ ॥

## अथ अष्टमखण्डः ।

अथार्त्विज्येषु ऋत्विजो यजमानस्य स विज्ञेयं प्रतिपाद्यते । यद्धोताजहातीति । आर्त्विज्ये होता यत् कर्म्म विज्ञाय जुहोति यत्तेन कर्म्मत्यागेन वाक् च वागेव यजमानो जहाति वाग्घि होता इति प्रागभिधानात् । तत्तस्मात् स होता यत् कर्म्म विज्ञाय करोति तदस्य यजमानस्य सम्बन्धी यज्ञः वाचं यजमाने दधाति किं च होता स्वय-

मपि इहलोके वाचा विष्वक् सर्वव्यापी सर्वव्यवहारसमर्थः सन् अमुष्मिन् परलोके सम्भवति स्वमभीष्टफलं प्राप्तुं समर्थो भवति। अतो होत्रा स्वकर्म्म सम्यग् विज्ञेयमित्यर्थः। अथाध्वर्य्युविज्ञेयम्---यदध्वर्य्युर्जहातीति यजमानं समानमन्यत्। अतोऽध्वर्य्युणा स्वकर्म्म सम्यग् विज्ञेयमित्यभिप्रायः। ब्रह्मविज्ञेयं दर्शयति--यद्ब्रह्मा जहातीति। ब्रह्मा यत् स्वकीयं कर्म्म जहाति मन एव यजमानन्यजति मनो मे ब्रह्मेत्युक्तत्वान्मनसा विष्णुत्वं मनसि स्थितं प्राप्तुं सर्वमभीष्टं पूर्ववत्। उद्गातृविज्ञेयं दर्शयति--यदुद्गाता जहातीति। यद् स्वीयं कर्मोद्गाता जहाति तर्हि श्रोत्रमेव यजमानन्यजति श्रोत्रं मउद्गातेत्युदितत्वात्। अतः स्वकर्म्म जानन् करोति च यजमाने श्रोत्रं निदधाति स्वयमपि श्रोत्रेषु सर्वं श्रोतव्यं सर्वतो जानन् परलोके स्वाभीष्टं लभत इति। अतः स्वीयं कर्म्म सम्यग् जानीयादित्यर्थः। सदस्य विज्ञेयं दर्शयति--यत् सदस्यो जहातीति [सदस्यः स्वीयकर्माज्ञानाज्जहाति आत्मैव यजमानं जहाति योऽयमन्तः पुरुष आकाशः स मे सदस्य इति सदस्यात्मनोक्तत्वात् स आत्मना विष्वगन्यनिरपेक्षेणैव सर्वव्यापी। शिष्टं सामान्यम्। होत्राशंसिनां विज्ञेयं दर्शयति--यद्धोत्राशंसिनो जहतीति। यद्धोत्राशंसिनो जहत्यङ्गानि अङ्गान्येव यजमानन्यजन्ति यदि स्वीयं कर्म्म विज्ञाय कुर्वन्ति यजमाने अङ्गान्येव दधति ते विषयैरपि कालैरन्यैर्विष्वङ्क्सर्वगा भवन्ति। चमसाध्वर्य्युविज्ञेयं दर्शयति--यच्चमसाध्वर्य्यवो जहतीति। यदि चमसाध्वर्य्यवः स्वयं कर्म्माज्ञानात्त्यजति लोमान्येव यजमानन्य-

जन्ति लोमानि मे चमसाध्वर्यव इत्युक्तत्वात् यथोक्त मुपसंहरति—तस्मादिति । यस्मादेवंविद् यथोक्तप्रकारेण स्वकर्म जानन् ऋत्विक् यज्ञे हीन मङ्गवैकल्यं न कुर्य्यात् । अथ वा इति अथानन्तर मङ्गवैकल्यं परिहारायैव ऋत्विजां कर्म्माण्येव यजमानस्य विज्ञान मुच्यते इति शेषः । किं तद्विज्ञेय मित्याशङ्क्य तदुक्त मुपोद्घातमाह—पशवो ह्यध्वर्युमिति । अथ यजमानस्य पशवोऽध्वर्युमेवानुवर्त्तत इति तदीयकीर्त्तिरपि होतार मनुवर्त्तते । अस्य योगक्षेमः अलब्धलाभो योगः लब्धस्य परिपालनं क्षेमः तदुभयमपि ब्रह्माण मनुगच्छति आत्मा स्वयं यजमानः प्रजा च पुत्रादिका च उद्गातार मनुवर्त्तत इति ॥ ८ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे
षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
द्वितीयप्रपाठके अष्टमखण्डः ।

---

अथ नवमखण्डः ।

इदानीं मौपोद्घातिकमाह—स यदि पशुतो इति । तत्र स यजमानो यदि पशुतः पशुभ्यः व्याधीयेत भ्रश्येत्तर्हि ममेद मनिष्ट मध्वर्युः स्वकर्म्मपरित्यागेनाकार्षीदिति विद्यात् जानीयात् । अथ पुनः यद्येनं यजमानं पापिका पापसम्बन्धिनी कीर्त्तिरनूदियात् अनुगच्छेत् । ममेदं कष्ट होता स्वकर्म्मत्यागेनाकार्षीदिति विद्यात् । अथ पुनर्यद्यस्य योगक्षेमो व्यथेत नश्येत्तर्हि ममेदं

कष्ट मकार्षीदिति विद्यात् । अथ यद्यसौ आत्मा आध्या-
त्मिकक्लेशेन प्रजाया पुत्रादिकमायाम्यीयेत्तविधं नो भवे-
त्तर्हि उर्वीतिं ममेद मनिष्ट मकार्षीदिति । अथ नैमित्ति-
कान् होमान् दर्शयति—प्राणदेवत्यो वै ब्रह्मा इति ।
ब्रह्मा प्राणदेवत्यो वै प्राणदेवत्यः खलु । व्यानो मे
ब्रह्मेति व्यानाख्यप्राणात्मकत्वाद् ब्रह्मणः इतरे होत्रादय
ऋत्विजः यद्देवत्याः वाग्घोतेति श्रुतेः । यत्र यदि स
यजमानो ब्रह्मा मे मम यज्ञे न्यूनमकरोदकार्षीत् इति
मन्यत निश्चिनुयात् तर्हि हरितप्राशिताऽवयवोपष्टम्भा-
द्धरितवर्णं दर्भनाड्या प्रवध्य प्रवध्य स्रुवमवधाय आज्यं
चतुर्गृहीत्वा नमः प्राणाय वाचस्पतये स्वाहेत्यनेन मन्त्रेण
चोदितेन जुहुयात् अथ पुनर्यदि व यज्ञेव इतरे होत्रादय
ऋत्विजो मम यज्ञे इदं हि इद मकार्षुरिति यजमानो
मन्येत तर्हि नमो वाचे प्राणपतये स्वाहेत्यनेन मन्त्रेण
पूर्ववच्चतुर्गृहीत माज्यं गृहीत्वा जुहुयात् । यदि वा
इतरो ब्रह्मा यदि वा इतरे होत्रादयः सर्वेऽपि न्यून-
मकार्षीरिति यदि यजमानो मन्येत तर्हि तेष्वेव गार्ह-
पत्यादिष्वग्निष्वनुपध्यायं क्रमेण नमः प्राणाय वाचस्पतये
स्वाहा नमो वाचे प्राणपतये स्वाहेत्याभ्याम् मन्त्राभ्यां
पूर्ववत् चतुर्गृहीत माज्यं गृहीत्वा जुहुयात् । स्रुचि
निहितस्य हिरण्यस्य प्रतिपत्तिं दर्शयति—अथ तद्धिरण्य-
मिति । अथैनं हुत्वा पश्चात्तद्धिरण्यं ब्रह्मणे दद्यात् । यथो-
क्तप्रायश्चित्तहोमं पुनर्यज्ञत्वेन स्तौति—अथ यदाहेति ।
अथ शब्दो वाक्योपक्रमे । यज्ञो वाव पुनर्यज्ञ एष यज्ञस्य

प्रायश्चित्तिरिति यदाह यज्ञोकाव यज्ञस्य प्रायश्चित्तिरिति। पुनर्यज्ञ एव स एते जहत्वे बाहुतो यज्ञविभ्रष्टस्य यदृह्न् न्यूनत्वस्य प्रायश्चित्तिरिति ॥ ९ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
द्वितीयप्रपाठके नवमः खण्डः।

---

अथ दशमखण्डः।

अथ ऋत्विग्वरणं विधातुं स्तौति—ते वा ऋत्विज इति। ते वै ते प्रसिद्धा ऋत्विजः स विख्यात एव यजमानः तस्य दैवा देवरूपा ऋत्विजः तथा मानुषा मनुष्यसम्बन्धि-नोऽप्यन्ये तत्र यं यजमानं दैवा ऋत्विजो याजयन्ति स यजमानो दैवतैर्हेतुभिरवरुन्धे व्याप्नोति न मनुष्यलोकम्। अथ पुनर्मानुषा ऋत्विजो याजयन्ति स यजमानो मनुष्य-लोकैरेव तैरवरुन्धे न देवलोकम्। अथ पुनर्यं यजमानं उभये दैवा मानुषाश्च ऋत्विजो याजयन्ति स देव-लोकञ्च मनुष्यलोकञ्च तैरुभयैर्ऋत्विग्भिरवरुन्धे एवमुभय-विधा ऋत्विजः प्रशस्य तत्र दैवत्वि ऋग्वरणं विधत्ते—स एता-न्दैवानिति। स यजमानोऽग्निर्मे होतेत्यादिना प्रतिमन्त्रैरे-तान्दैवानृत्विजो वृणीतेति। अथानन्तरं मानुष ऋत्वि ग्वरणं विधत्ते—स एतान्दैवानृत्विज इति। स्वयं यज-मान एतान्दैवानृत्विजो यथोक्तप्रकारेण वृत्वा अथ पश्चादेतान्मानुषानृत्विजो वृणीत। ये ऋत्विज एन-

अभिराधयेयुः सम्यक् स्वस्य कर्मानुष्ठानेन फलास्ते समर्थं कुर्युः तत्राय ऋत्विग्वरणप्रकारः। एतन्नामकैमेतत्संख्यैनैतत्पृष्ठेन तावद्दक्षिणेन यज्ञेनाहं यक्ष्ये तत्र मे त्वं होता। त्व मध्वर्युरित्यादि। अथ देवयजने विज्ञेय मुच्यते—तत्र प्रथमं क्षत्रिये प्रतिदेवयजनप्रार्थनां दर्शयति—अथ क्षत्रियमिति। अथ शब्दो वाक्योपक्रमे। क्षत्रियं राजानं देवयजनं देवा इज्यन्तेऽस्मिन् देशे इति देवयजनं यागदेशं याचेत् यजमानः। राजा देवयजने दत्ते यजमानस्तं किं ब्रूयात् इत्यत्राह—स चेत्तस्मा इति। स राजा यद् यस्मै देवयजनं दद्यात् तर्हि त्वं राजा त्वं देवयजनवान् भूया इत्याशीर्वचनं ब्रूयादिति। विपर्यये वचनप्रकारं दर्शयति—न चेत्तस्मै इति। अस्मै प्रार्थयित्रे यजमानाय स राजा यदि देवयजनं न दद्यात्तर्हि यद्देवयजन महं वेद अन्यतो विजानामि विन्दामीत्यर्थः। लब्धेऽन्यस्मिन्देशे त्वां हृषानि छिनद्मीत्येवं राजानं ब्रूयात्। अथोक्तं प्रशंसति—अग्निर्वाव इति। अग्निर्वाव अग्निरेव यद्देवयजनम्। अन्यदप्येवं व्याख्येयम्। एते देवाग्निरूपेष्वेव मदातारं राजान माहृश्चति अथो ह अतएवैन मपौरुषेयीं देवकर्तृका मेव नेति नयति। तस्माद्राजा देवयजनं याचितो दद्यादेव न निवारयेदित्यर्थः। एवं राजानं प्रति देवयजनप्रार्थनां दर्शयित्वा इदानीं ऋत्विजः प्रति तत्प्रार्थनां दर्शयति—अग्निर्मे होतेति मे ममाग्निरेव होता सोऽग्निरूपो होता मे मह्यं देवयजनं ददातु उपांशूक्ताये होतर्मे देवयजनं देहीत्युच्चैर्मन्त्रयेत्। अथ देवेष्वेवं यथोक्तप्रकारं दर्शयति—तावा

एता इति। ता एता अग्न्यादय एव ऋत्विजां सम्बन्धिनीभिर्वाग्भिः प्रार्थिताः सत्यः देवयजनं ददति यजमानाय प्रयच्छति स च यजमानोऽग्न्यादिभिरेव दत्ते देवयजने यजन्ते न तु मानुषैर्दत्ते इत्यर्थः। कीदृशं देवयजन मित्याशङ्क्य तल्लक्षणं दर्शयितु मुपक्रमते—यदुन्नतमिति। यद्भूतलं भूम्याः स्वसमीपस्थाया भूमेरुन्नतं स्वय मेव न त्वसमीपस्थं प्रदेशान्तरमुन्नतं देवयजनत्वे ग्राह्यं तथाच द्राह्यायणः—नचास्य स्थूलतर मदूरे स्यादित्यस्यार्थः। अस्य देवयजनस्य दूरे समीपे स्थूलतर मत्युन्नतं स्यात् किन्तु देवयजनसमीपे प्रदेशे अत्युन्नतं भवेदित्यर्थः। किं च अनूषरं ऊषर रहित मेव भूतलं देवयजनस्य एतस्यैव विवरणं यत्र यस्मिन् भूतले ओषधयो वहुला भवेयुस्तदनूषरम् ऊषरप्रदेशे तेषा मनुद्भवात्। अपिच अत्र च देशे चात्वालसारिण्यः। चात्वालसारिण्य आपः स्युः तस्य चात्वालदेशस्य पुरः पुरस्तादापः सञ्चरन्ति तद्देवयजनं कार्य्यम्। विशेषान्तरमाह—तस्य न पुरस्तादिति। तस्य देवयजनस्य परिग्राह्यस्य हि पुरस्ताच्छम्याप्रासात् शम्यानिपातनाद्यावद्देशोऽस्ति ततः पुरो देवयजनमात्रं देवयजनस्य यावत् प्रमाणं तावन्मात्रं प्रदेशं नातिशिष्यान्नाति वर्त्तयेत् अवशेषयेत्। तदवशेषणे प्रत्यवाय माह—अवरपुरुषा हा इति। यस्य देवयजनस्य पुरस्ताद्भागे शम्यानिपातनादर्वागेवं देवयजनमात्रं मतिरेचयन्ति अतिशेषयन्ति अस्मात्तदवशेषादवरपुरुषा यजमानातिरिक्ता हे ष्टार इत्यर्थः। ते श्रेयांसः। अतिशयेन प्रशंस्या भवन्ति। प्रसङ्गाद्देवयजनस्य दक्षिणभागे तद्योग्यदेशस्थिते न दोष इत्याह—काम्

दक्षिणत इति। दक्षिणतः कामं यथेष्टं अभिचरेयुः तर्ह्येनं यजमानं दक्षिणा आगामुकाभवन्तीति। पश्चिमभागे तावद्दे-शावशेषणे प्रत्यवायमाह—कामं पश्चादिति। कामं इच्छया पश्चाद्भागे यदि तावन्मात्रं शेष मवशेषयेयुः अस्मादतिरेका-द्वरपुरुषाः श्रेयांसो भवन्ति। उत्तरभागे तावन्मात्रदेशावशे-षणे श्रेयःप्राप्तिं दर्शयति—काम मुत्तरतइति। उत्तरतः काममिच्छयातिरेकः कामन्त्वेनं यजमानम् उत्तरा अन्यापि पुनर्यागप्राप्तिः देवयज्योपनामुका भवति प्राप्नोतीत्यर्थः। किं चास्य औत्तरोत्तरिणी परम्परया वृद्धा भवति। धर्मा-न्तरं दर्शयति—यस्य पुरस्तादिति। यस्य पुरस्तात्तन्निनाय आदित्य इति त्रीणि ज्योतींषि दृश्येरन् तद्देवयजनं कार्य्यम्। एवं सति तत्त्रिकं शुक्रं शुक्रं ज्योतिः त्रिज्योतिष्कं भवती-त्यर्थः। तत्र देव यजनस्य पुरस्ताद्भागे अपामेवावस्थानं विधीयते। अग्न्यादित्ययोरवस्थान मनुद्यति। पुरस्ताद्भागे आहवनीयस्योपस्थाननियमादित्यवस्थानस्य प्रत्यक्षसिद्धत्वात्। अपा मभावे न्यग्रोधादि नापि भवितव्यमिति दर्शयति—पुरस्तादिति। देवयजनं पुरस्तात् परेभागे चित्रं यो वन-स्पतिन्यग्रोधादि तच्छुक्रमेव कार्य्यम्। तथाच द्राह्यायणः तदभावे महावृक्ष उदपानो महापथो वेति। तस्यार्थः तर-ङ्गिणीतटकादीना मभावे वृक्षः। उदपानः कूपः महापथो वा ग्राह्यइति। पश्चाद्भागे महावृक्षावस्थाने प्रत्यवाय माह —पश्चा च्चित्रमिति। यदि देवयजनं पश्चाच्चित्रं भवेत्तर्हि श्मशानकरणमेव स्यात्। धर्मान्तरमाह—प्रागुदक्प्रवण-मिति। पूर्वोत्तरो देशः प्रवणो निम्नो यस्य तत्तथा देवयज-

मन्तैराप्यम्। अन्यप्रवणतां निन्दति—पश्चाद्दक्षिणाइति यथोक्तलक्षणं देवयजनं स्तौति—यथा वै दक्षिण इति। यथा वै दक्षिणः पाणिः सर्वेषु पुण्यकर्मसु श्रेष्ठः एवं देवयजनं श्रेष्ठम्। श्मशानकरणं निन्दति—यथा सव्य इति। यथा सव्यः पाणिः पुण्यकर्मसु गर्हितः एवं पश्चाच्चित्रत्वादिलक्षणं श्मशानकरण मप्रशस्त मित्यर्थः। अभिचारयज्ञेषु देवयजनलक्षणमाह—यथा श्मशानकरणमिति। अभिचारीणां श्येनादीनां यागानां देवयजनं यथा श्मशानकरणं पश्चाच्चित्रत्वयुक्तं भवति तथा कुर्य्यात्। तथा द्राह्यायणः। विपर्य्ययस्याभिचरणीयेषु स्थलादन्यद्देवयजनमात्राच्चेति। अस्यार्थः अभिचरणेषु क्रतुषु स्थलादुन्नतत्वाद्देवयजनमात्रात् पुरस्ताद्देवयजनमात्राऽवशेषा च्चान्यत्सर्वमूषरत्वादिकं विपर्य्यस्य कुर्य्यादिति। एतदुक्तं भवति जषरं विषमं पुरस्ताज्जलशून्यम्। पश्चाच्चित्रं दक्षिणा प्रत्यक् प्रवणं देवयजनं कुर्य्यादिति॥ यथोक्तलक्षणदेशाभावाभयं कश्चिद्देशं परिगृह्णीतेत्याह—अप्युहैकइति। अपि शब्दस्त्वर्थे अन्ये एव माहुः। यस्मिन् कस्मिंश्चिद्देशे श्रद्दधानो अत्र अत्र फलं भवत्येवेत्यास्तिकः सन् यजते स ऋध्नोति। यथोक्त फलं प्राप्नोत्येवेति॥ १०॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
द्वितीयप्रपाठके दशमखण्डः।

## इति द्वितीयः प्रपाठकः।

# अथ तृतीयः प्रपाठकः।

—०—

## प्रथमखण्डः।

अथावभृथधर्मा उच्यन्ते तत्र प्रथमं यज्ञावशिष्टस्य द्रव्यस्यान्यस्य विनियोगप्रदर्शनपुरःसर मपः प्रतिनियमं विधत्ते यावान्यज्ञे इति। यज्ञे यावान् रसः सारभूतं यष्टव्य-द्रव्येषु तेन द्रव्येण अतोऽवभृथात्पूर्वमेव प्राचीनं प्राङ्मु-खतया प्रचरन्ति। चोदितानुसारेण प्रक्षिपति जुहोती-त्यर्थः। अथ पुनर्यद् यातयामं गतरसं तदेतत्परिषिच्यते अवशिष्टम्भवति तत्परिशिष्टं भवति परिशिष्टं द्रव्यम्। ऋजीषं तत्राह। विद्वान्तृतीयसवनस्यापि समाप्तत्वेन रस-ग्रहणार्थत्वाभावात् किं च वृथैव त्याजयेयुरिति यत्तस्मा-दपि न भवति वृथा त्यागायापि न भवतीत्यर्थः। अपिच अग्नावनुप्रहरेयुर्जुहुयुरिति यत्तस्मादपि न भवति पुनर्हो-मार्थमपि न भवतीत्यर्थः। तेनान्यत्रोपयोगेनाप एवाभ्यव-यन्ति। याः प्रतिज्ञावशिष्टस्य नयनं ता अपः प्रशंसति— आपो वै इति। सर्वस्याप एव शान्तिः शान्तिकारिण्यः। किं च सर्वस्य जगत एव प्रतिष्ठा। अप्सु पृथिवीति श्रुतेः। तत्रैव प्रशंसापूर्वकक्तव्यं दर्शयति—पाप्मानं हैष हन्तीति यो यजमानो यजते एष पाप्मानमेव हन्ति तमिमं पाप्मानं हतं पापस्य हन्तारं यजमानमपः प्रति-हाराणीति। प्रस्तोता तेनान्तरेणेति। चात्वालञ्चोत्करं चान्तरेण चात्वालोत्करयोर्मध्ये तेन यथा प्रतिपद्यन्ते।

अपः प्रतिगच्छेयुः । यथोक्तं प्रशंसति—एतद्वै इति । एतद्वै देवानां यथोक्तमार्गस्य रूपं देवानां तीर्थं सर्वपापनिवारकत्वात् यदि । उक्तार्थे मन्त्रसम्मति माह—तदेत इति । ऋषिरतीन्द्रियार्थदर्शी सन्नाम ऋषिधर्मोऽस्य वह आप्तानं व्यापकं तीर्थमिह लोके कः प्रवोचत् । तस्य महिमानं को वदतीत्यर्थः । येन तीर्थरूपेण यथामार्गेणागत्य सुतस्य सुतं सोमं देवा प्रपिबन्तो प्रकर्षेण पिबन्ति इति शब्दो मन्त्रसमाप्तिद्योतनार्थः । प्रकारान्तरेण तदेव प्रशंसति—एतद्वै देवानामिति । एतदेव देवानां सम्बन्धि तीर्थम् अतोऽस्मादन्यदन्यस्य सम्बन्धि तदतीर्थमेवेति । यथोक्तमर्थमुपसंहरति—तस्मादेतेनैवेति । यस्मादेव तस्माद्यथा तेन मन्त्रेणैव प्रसूते प्रवेशे प्रपद्येत तथा एतेनैव पथा निष्क्रामत् अवभृतार्थं निर्गच्छन्निर्गमनकाले रक्षोघ्न मवभृथं साम गेयमिति दर्शयितुमाख्यायिकया तत् प्रशंसति तान् प्रच्युतानिति । देवयजनात् प्रच्युतान्निर्गतान् अप उदकान्यप्राप्तान् देवानेतस्मिन्नवकाशे मध्ये मार्गे रक्षांसि राक्षसान् अपघ्नन्नपीड़यन् तत्र स यः प्रसिद्धो रक्षोहा रक्षसां हन्ता अग्निष्टपतीत्यस्या मृचि गेयं या मपश्यत्ततस्तानि रक्षांसि एतेन साम्ना अग्निरपाहतावधीत् । तानि रक्षांसि अमुर्हि संग्रामे अप हननानि सन्त्यभूवन्निन्द्रे देवा अकुर्वन् अभिमन्यन्त इत्यर्थः । इत्येवा एवै एतदिदानीमपि रक्षांसि अपसेधति तेन साम्ना हिनस्तीत्यर्थः । तत्र स्तोमे किञ्चिद्विशेषमाह—तस्याहावोहाव इति । तस्य साम्न अहाव इत्येवं रूपं स्तोभं स्तोभति कुर्यादित्यर्थः । अत-

एवैतदिदानीं अहावीसु अहावस्त्रित्येवं वाक्ये रक्षांसि अपसेधति निराकरोतीति। सामाश्रयस्य मन्त्रस्यामुं पाद-मनुद्य व्याचष्टे—अग्निष्टपतीति अग्निष्टपतिद्रुतं प्रकाशेन रक्षांसि व तत् प्रतिदहति भस्मसात्करोति। प्रतिपादं स्तो-भानुत्पत्तिं दर्शयति पादायेति। यथोक्तास्तोभाः पादाय पादाय प्रतिपाद मनुवर्त्तन्ते। रक्षसा मपहननायेति तथैव पादान्तर मनुद्य चाचष्टे—विश्वमिति। विश्वं सर्वं अत्रिणं मांसादेरत्तारं राक्षसं सन्दह। त्रिरुक्तिरावृत्ति-द्योतनार्थो इति यदा तेन अत्रिरेव रक्षांसि राक्षसानेत-द्रूपं पाप मेवापसेधति। यथोक्तसामनिधने त्रिरावृत्तिं दर्शयति—तस्य त्रिरिति। तस्य साम्नो यं निधनं तच्चि-स्त्रिवार मावर्त्तयेदित्याहुर्ब्रह्मवादिनः। उक्तां त्रिरा वृत्तिं स्तौति—यं वै सुहतमिति। इयं निधनत्रिरावृत्ति रेव राक्षसं सुहतं घ्नन्ति। वचनव्यत्ययः। अथ राक्षसः पुन-र्नोद्गुक्ते उत्तिष्ठेदित्यर्थः। यथाह यथा खलु सुष्ठु तं हन्तव्य मुपद्रवकारिणं पुरुषं पुनः पुनरायुधमादाय किन्तु हन्यात्। एतच्चिविधेनोच्चारणेनापि तादृक्राक्षसहननायेत्यर्थः। तस्य साम्न अतिच्छन्दसि गानं दर्शयति—तद्वा इति। तदेतत्-सामाति च्छन्दःसु भवति। बहुवचन मध्वर्यु प्रैषभेदाय आवृत्त्यपेक्षया न तु स्वरूपेण एकत्वाहचः। यथोक्ताति च्छन्दः प्रशंसति—वारणमिव वा इति। एतच्छन्दः वार-णमिव वै राक्षसानां निवारक मेव खलु यद्येनातिच्छन्दा अयं मन्त्र अतएव रक्षसां वारणानीव निवारणीयान्ये-वारणायतनानि अरण्यगृहाणि भवन्ति तत्तस्माद्रक्षो-

गणः। स्वं स्वीयं मरणं मतएव स्वारणेन यथा निःक्रामं गच्छन् एतदतिच्छन्दोऽपि तादृशया रचसा मरणप्रापकं किं तदतिच्छन्दः यस्मिन्ने तत् अवभृथं साम गायेदित्यताह— तद्दै सप्तेति। सप्तपदासु सप्तपदोपमेयास्वृक्षु एतत्साम भवति। बहुवचनं गानावृत्यपेक्षया। यथोक्तसंख्यां स्तौति—सप्त वै छन्दांसीति। चतुरुत्तराणि उत्तरोत्तराधिक्येनाक्षरचतुष्टयोपेतानि गायत्र्यादीनि छन्दांसि सप्त वै सप्तैव। तत्तेन यथा लोकः सर्वैः छन्दोभिरभयेन भयराहित्येनातिक्रामेत् सर्वदुरितम् एतदपि तादृशचोनिवारकप्रशंसापूर्वकं मवभृथसाम्नः त्रिणांनं दर्शयति—तस्य त्रिर्वचनं इति। अग्निष्टपत्यस्यां सप्तपदायां ऋचि साम त्रिराह त्रिर्गायेत्। तस्य त्रिर्वचने सति पदानि पदा एकविंशतिः सामानि त्रीणि भवन्ति। तत्तथा सति चतुर्विंशतिः संख्या सम्पद्यते। अतः त्रिर्गानं प्रशस्तमित्यर्थः। यथोक्तसंख्या मुपजीव्य पुनस्तत् संवत्सरात्मानं स्तौति—चतुर्विंशतिरिति। चतुर्विंशतिरर्द्धमासाः अतः साम्नापि चतुर्विंशतिसंख्यासाम्यात् संवत्सरः। संवत्सरसाम्यं साम्न उपपादयति तस्य ह वा इति। तस्यैतस्य संवत्सरात्मकस्य साम्नो हिङ्कार एवाऽहोरात्राणि प्राथम्यसाम्यात्। आदिराद्या भक्तिरेव मासाः श्रेष्ठत्वसाम्यात्। उद्गीथ एव वसन्तादयः मुख्यत्वसाम्यात्। प्रतिहार भक्तिरेव पौर्णमास्यः प्रतिहारसाम्यात् उपद्रवाख्या भक्तिरेवाष्टका। निधनमेव साम्यात्। सप्तभक्तिपक्षे संवत्सरसाम्यमुपपाद्येदानीं पञ्चभक्तिपक्षे तत्साम्य मुपपादयति—तस्य वा एतस्येति। तस्यैतस्य संव-

त्स्वरात्मकस्य साम्नो हिङ्कारादय एव वसन्ते तस्माद्धे-मन्तं प्रजा निधन कृता इवासते निधनरूपमिवैतर्हि तस्मादेता एतं हैमन्तम् ऋतु: प्रजा: सार्वनिधनकृता नि-धनकारिण्य उपसंहृत्य व्यापार इवासते एतर्हि एवं सति निधनरूपामिव हैमन्तस्य रूपं व्यापारोपरतिसाम्यादिति। एवं ऋचो वसवभृथसाम्यं दर्शयित्वा इदानीं प्राच्यादिषु दिक्ष्वे कैक मेच्छिकां विकल्पेन प्रश्नपूर्वक मवभृथगमनं दर्शयितुं वृद्धानां प्रश्नं तावदुपक्षिपति—तदाहुरिति। तदाहुः का-न्दिश मभि लक्ष्यावभृथ मभ्यवेयु: ऋत्विज: प्रगच्छन्ति। तत्र प्रथमं कल्पं सप्ररोचनमाह—प्राञ्चोऽभ्यवेयुरिति। प्राञ्चः प्रागभिमुखा: सन्तोऽभ्यवेयुरव भृथार्थमेव प्रतिग-च्छेयुः। या एषा दिक् देवानां सम्बन्धिनी खलु। यद् यां प्राची या देवानान्दिक् प्राचीनोऽस्माकं यज्ञः स्वान्दिश मनुसन्तिष्ठाद्दौ तिष्ठतेर्लिट्। एत ऐ इत्येकारः प्रतिष्ठते। भवत्विति प्राचीगमनमित्यर्थः। द्वितीयं कल्पं सप्ररोचनं दर्शयति—दक्षिणाभ्यवेयुरिति। दक्षिणा दक्षिणतोऽभ्यवेयुः अतएव एव यजमानः पाप्मानं मे हन्ति यो जनः ते तमिमं पाप्मानं हतं निःपापं यजमानं दक्षिणाया पितृणां दिक्षा-मोनु यज्ञः सन्तिष्ठाता इतीति दक्षिणाहराणि नयानीति प्रस्तोता ब्रवीति सा एषा दिक् पितृणां सम्बन्धिनी खलु या दक्षिणा। तृतीयं कल्पं प्ररोचनं दर्शयति—प्रत्यञ्चोऽभ्य-वेयुरिति। तथा च स्मृत्यन्तरं देव पितर मनुष्या दिशो व्यभजनं प्राचीं देवा: दक्षिणां पितरः प्रतीचीं मनुष्या इति स्पष्टमन्यत्। कल्पान्तरस्तत्प्ररोचनमाह—उदञ्चोऽभ्य-

वेयुरिति। उदङ्मुखाः अवभृथमभ्यवेयुरेषा दिग् नक्षत्राणां स्वभूता या दिवि नक्षत्राधिपतेः सोमस्यासम्बन्धिरेव स्पष्ट मन्यत्। यथोक्तानां दिशां मध्ये यस्यां दिशि भूयिष्ठा आपो भवन्ति तत्र गच्छेयुरिति। नियमं दर्शयति—अतोवा-वेति। अतो वाव यतमथा कतमथा यस्यां कस्यां दिशि बहूना दिशां प्रकृतत्वान्निर्द्धारणे डतमच्। आपो भूयिष्ठा स्यु-स्तत्राभ्यवेयुर्गच्छेयुस्तत्र प्राच्यां दिशि दिङ्नियम इत्यर्थः। यथोक्तार्थविदं प्रशंसति—यद्वै विद्वानिति। अस्मात्क-र्मणः इदं श्रेयो भवतीति विद्वान् जानानः कर्म्म करोति तेन तेन कर्मणा वसीयागति शयेन वसुमानेव भवति। नद्यां तड़ाकादिषु वावभृथगमनमिति विचारपूर्वकं व्यव-स्थितविकल्पं दर्शयितुं विचारं तावदाह—तदाहुरिति। तदाहुर्ब्रह्मवादिनः स्रवन्तीषु चला स्वप्सु अभ्यवेयुः अवभृ-थार्थं गच्छेयुः स्थावरासु अचलास्वप्सु वेति। श्रुतौ विचारार्थौ तत्राद्यं पक्षं प्रशंसितुं दर्शयति—स्रवन्ती-ष्विति। हृतपापमयः प्रतिहृतं यज्ञं प्रथयत्विति। स्रव-न्तीषु गामगमित्यर्थः। स प्रशंसं पक्षान्तरमाह याः स्थाव-राप इति। याः स्थावराः याः अचलाः शैवल्यः शैवाल-युक्ता आपः सन्ति ता अभ्यवेयुरवभृथार्थमितोऽस्मात्कृतो-ऽङ्गो यज्ञाविक्षुब्धः सन् प्रत्युपतिष्ठते मागच्छति। शैवाल्या-स्वप्सु गमनमित्यर्थः। असम्भवासम्भवाभ्यां विकल्पो व्यव-स्थितो द्रष्टव्यः। नदीतटाकयोर्मध्ये यत्रापो भूयिष्ठा-स्तत्र गच्छेयुरिति नियममाह—अतो वा व इति। अथो अपि च यतरथा कतरथा चैव यत्र कुत्रचित्कह्रदयस्य पूर्व-

सुपन्यस्तत्वाद् द्वयोरेकस्य निर्द्धारणोऽपरत्र आपो भूयिष्ठाः स्यु स्तत्रैवाभ्यवेयुः। उक्तार्थविद् प्रशंसति—यद्वै विद्वानिति। व्याख्याततरमेतत् ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे तृतीयप्रपाठके
प्रथमः खण्डः।

---

अथाभिचरणीयत्रिषु एकस्यैहिङ्करोत्याद्यः पञ्चानुवाकाः त्रिवृदादीनां त्रिणवपर्य्यन्तानां विष्टुतिचोदनाः तत्र त्रिवृत्स्तोमेषु संज्ञके द्वे विष्टुती स्तः इति तद्विधायकं ब्राह्मणमेव माम्नायते एकस्यै हिङ्करोति स प्रथममुद्गाता एकस्यै एकामृचङ्गातुं हिङ्कारं कुर्य्यात्। क्रियार्थोपपदस्य कर्मणीति सर्वत्र चतुर्थी। स हिङ्कर्त्ता प्रथमया ऋचा गायेदिति शेषः। तृतीयया पञ्चततस्तेभ्यस्तिस्र ऋचो गातुं हिङ्करोति समध्यमया ऋचा। उत्वो गायेदित्येका विष्टुतिः। अतएवैकस्यै हिङ्करोति स प्रथमयेति पूर्ववद् व्याख्येयम्। तिसृभ्यो हिङ्करोति स पञ्चभिस्तिसृभि ऋग्भिरानुलोम्येन गायेदित्यर्थः पञ्चभ्यो हिङ्कुर्यात् स प्रथममेकया गायेत्ततः स एकया द्वितीयया गायेत्स हिङ्कर्त्ता उद्गाता तिसृभिस्तृतीयया ऋचा त्रिर्गायेदिति एवं त्रिवृत इषु संज्ञका विष्टुतिरिति द्विविधेत्यर्थः। अनया कर्त्तव्यतां दर्शयति—अभिचरन्निति। एतया द्विविधया विष्टुत्याभिचार कर्म्म कुर्वाणः स्तुवीतेत्यर्थः। अस्या विष्टुतेरिषु साम्यं दर्शयति—अनीकं प्रथ-

मेष्विति । उभयतः पर्याया प्रथमा ऋगिति अनीक मिषुधाराख्यानीया मध्यमे पर्याये यतो यास्तिस्रोगीतिनिष्पन्ना ऋचः सन्दधाति । ता इषुस्तदा सनं ज्या मौर्वी चेति । तिस्र एतत्स्थानीय इत्यर्थः । एताभिः शरं शराशनं ज्या दधाति खलु पञ्चभिरेभिरुक्तैः अपशन्त आया मत्याभिर्विसृजते धनुःषु संहिताम् इषु मलक्ष्यदेशं प्रतिविसृजतो अशनीकादिवि सर्जनान्ताः पञ्च संख्याः शरेऽपि वर्त्तन्त इति तत् साम्यं द्विविधाया विष्टुतेर्युक्तमित्यर्थः । तत् प्रशंसति—स्तृणुते भ्रातृव्यमिति । य एतया विष्टुत्या स्तुते भ्रातृव्यं सपत्नं स्तृणुते हिनस्ति स्तृहि हिंसायामिति धातुरात्मना स्वेनैव अन्ये निरपेक्षणवसीयानतिशयेन वसुमान् भवतीति ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ,
षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे तृतीयप्रपाठके
द्वितीयः खण्डः ।

---

## अथ तृतीयखण्डः ।

पञ्चदशस्तोमस्य विष्टुतिविधायकं ब्राह्मणमेव मामायते—तिसृभ्यो हिङ्करोतीति । अदावुभौ पर्यायौ पराचीभिः आनुलोम्येन पराचीभि ऋग्भिः कार्यौ तृतीयः पर्यायः एकैकस्या ऋचः त्रिरावृत्त्या कार्य्य इत्यर्थः । पञ्चदशस्य विष्टुतिरिति । अथ कर्त्तव्यत्वं दर्शयति—अभिचरन्निति । उक्तं पञ्चदशं स्तौति—वज्रो वै इति ।

वज्रो वै वज्र एव त्रिवृत् स्तोमः त्रिणवस्तोमोऽपि वज्रः तस्य वज्रस्य त्रिवृदेव त्रिणव एव वज्रस्य वज्रत्वं त्रिवृत् स्वभावात् । एतावता किं कृतमित्युक्तम् । यद्येवं त्रिवृत्त्रिणवाभ्यां स्तोमाभ्यां पञ्चदशस्तोमं विदधाति—तिसृभिस्त्रिवृतो विधानं न नवभिस्त्रिण वयेति तत्तेन वज्रं ये सम्यक् समीचीनं सन्दधाति । अवयविनं वज्रं वज्रावयवे सन्दधातीत्यर्थः । वज्रस्य त्रिवृत्त्रिणवसादृश्यं दर्शयति—एवमिव वै इति । एवमेव खलु वज्रः साधुः शत्रूणां साधको भवति प्रहरणतः प्रहरणतः प्रदेशेऽन्येव यस्मादयं वज्रस्तारम्भणतः ग्रहणप्रदेशे अणीयान् अणुतरो भवति स्थवीयान् स्थूलतरो भवति अत्रापि प्रथमसंख्यानसंख्यापेक्षया अल्पा नवसंख्या अधिका । अन्यसंख्याया अनभिहितत्वात् । तत् प्रशंसति—तेन पाप्मानमिति । यतो वा तेन पाप्मानं भ्रातृव्यं स्तृणुते हिनस्तीति । शिष्टं स्पष्टम् ॥ ३ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे तृतीयप्रपाठके तृतीयः खण्डः ।

---

## अथ चतुर्थः खण्डः ।

सप्तदशस्तोमस्य विष्टुत्याः कर्त्तव्यतां दर्शयति—एतयैवाभिचरन् स्तुवीतेति । एतया वक्ष्यमाणया विष्टुत्याभिचरन् शत्रुजिघांसुः स्तुवीत सप्तदशं स्तौति—वज्रो वै त्रिवृदिति वज्रः पञ्चदशो वज्रस्त्रिणवो यत्त्रिवृत्पञ्चदश त्रिणवैः

सप्तदशं विदधाति—वज्रस्य वज्रत्वं सुप्रसिद्धं वज्रः पञ्चदशः एतस्यैव तथात्वात् । वज्रस्त्रिणवं यद्यस्मात्त्रिवृदादिभिः सप्तदशं विदधाति । तिसृभिस्त्रिवृतो विधानं पञ्चभिः पञ्चदशस्य नवभिस्त्रिणवस्य । एतदुक्तं भवति—तिसृभिः पराचीभिः प्रथमः पर्य्यायः पञ्चभिर्मध्यमः नवभिरुत्तम इति । तत्तेन वज्रमेव वज्रावयवे सम्यक् सन्दधातीति ऋग्भिराद्यं पर्यायं गायेदिति शेषः । उत्तरौ एकस्या ऋचस्त्रिरावृत्या कार्याविल्यर्थः । अभिचरंत् स्तुवीत । अनया विष्टुत्या अभिचरन् पुरुषः स्तुवीतेति शेषः । उक्तमेकविंशं स्तौति—वज्रो वै इति । यद्येव त्रिवृत्त्रिणवाभ्यां स्तोमाभ्यां एकविंशं विदधाति तिसृभिः त्रिवृतो विधान नवभिस्त्रिणवस्येति । वज्रस्य त्रिवृदादि साद्दश्यं प्रशंसनञ्च करोति—एवमिवेति । एतया एकविंशस्तोम विष्टुत्या स्तुते । शेषं व्याख्यातचरम् ॥ ४ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे तृतीयप्रपाठके

चतुर्थः खण्डः ॥ ४ ॥

---

॥ अथ पञ्चमः खण्डः ॥

अथ त्रिणवस्तोमस्य विष्टुतिविधायकं ब्राह्मण मेवामाम्नायते । नवभ्यो हिङ्करोतीति । उद्गाता नवभ्यो नवचोंगातुं हिङ्‌र्यात् स हिङ्कर्त्ता त्रीनपि पर्य्यायानेकैकस्या ऋचस्त्रिरावृत्या तिसृभि ऋग्भिः कुर्य्यादित्यर्थः । अभिचरन् स्तुवी·

तेति। अनया त्रिणव स्तोमविष्टुत्या अभिचरन् स्तुवीतेति शेषः। उक्तत्रिणवं वज्रस्य सादृश्येन प्रशंसति—वज्रो वै त्रिणव इति। त्रिणव एव वज्रः तिसृभिस्त्रिणवत्वात्। त्रिवृती वज्र एव प्रसिद्धः तत्तस्माद् वज्र एव परागच्च न प्रवर्त्तयति। यः पुमानेतया त्रिणवस्तोमविष्टुत्या स्तुते स आत्मनैव वसीयान् वसुमत्तमो भवतीति ॥ ५ ॥

इयि श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणे द्वितीयब्राह्मणे तृतीयप्रपाठके पञ्चमः खण्डः।

## इति तृतीय प्रपाठकः।

—०—

## अथ चतुर्थः प्रपाठकः।

प्रथमः खण्डः।

चतुर्थाध्यायस्य प्रथमानुवाके पञ्चविंशब्राह्मणोक्तद्वादशाहादिक्रतस्य व्यूढ़द्वादशाहस्य धर्म्मा निरूप्यन्ते। तत्र प्रथम माद्यन्तयोः प्रायणीयोदयनीययोरह्नोः सर्वयज्ञस्य साधारणत्वादवशिष्टाना मह्नां मध्ये दशमस्याप्यविकृयात्तत्रापि न किञ्चिद्वक्तव्यमस्तीत्य वशिष्टस्य नवरात्रस्य धर्म्मभेदा अनुवर्ण्यन्ते। तत्र प्रथमत्रिरात्रस्य धर्म्मविशेषमाह—स्वरान्तः प्रथम इति। प्रथमस्त्रिरात्रः स्वरान्तः स्वरित मच्चर मन्ते यस्य स तथोक्तः त्रिरात्रसम्बन्धी यः पवमानः स्वरान्त इति भावः। तथा च पञ्चविंशब्राह्मणे पवमानसामविधानानन्तरमाम्नायते स्वरमुख्येनेति तथा

छन्दो गायत्री प्राणो वै गायत्रीति तत्र छन्दो गायत्री प्राण एवा प्राणापानव्यानैः त्रिवृत् प्राणः गायत्र्यपि त्रिपादिति अतो गायत्र्याः प्राणसाम्यम् अथवा मुखे प्राणः गायत्र्यपि मुखादुत्पन्नेति प्राणसाम्यं द्रष्टव्यं तस्मात्तेन छन्दसा यजमानः सर्वमायुरेतीति शेषः स्वरः प्रजापते रेव तयो स्तादात्म्यं शास्त्रसिद्ध मेवं तेन स्वरेण देहान्ते यजमानः प्रजापति मेवाप्नोति । द्वितीयं त्रिरात्रधर्म्म माह— निधनान्त इति । द्वितीयं त्रिरात्रो निधनान्तो निधनमन्ते यस्य स तथोक्तः द्वितीयपवमानो निधनान्त इत्यर्थः । तथोक्तं पञ्चविंशब्राह्मणे निधनान्ताः पवमाना भवन्तीति । तथा त्रिष्टुप् जगतीच्छन्दो व्यूहेन त्रिष्टुपम्प्रमुखम् । तदुभयं प्रशंसति—वीर्य्यं वै त्रिष्टुबिति । त्रिष्टुप् वीर्य्य मेव इन्द्रेण सहोत्पन्नत्वात् पुरुषः चतुष्पाङ्गो वीर्यवान् निधनं निधानं तदाश्रितः तेनाश्रयाश्रयिसम्बन्धेन पुरुषशब्देन निधनं लक्ष्यते तथाच निधनं त्रैष्टुभमित्यर्थः । तेन यजमानं पुरुषं पुत्रपौत्रादिक माप्नोति । तृतीयं त्रिरात्रधर्म्ममाह—इड़ान्त इति । तृतीयस्त्रिरात्रः इड़ान्तः इड़ा अन्तो यस्य स तथोक्तः तदीयाः पवमाना इड़ान्ता इत्यर्थः । तथाचोक्तं पञ्चविंशब्राह्मणे इड़ान्ताः पवमाना भवन्तीति जगती तृतीयं छन्दो व्यूहेन जगतीप्रमुखमित्यर्थः । तदुभयं प्रशंसति—पशवो वा इति अतिरोहितार्थमेतत् । ननु यदि गायत्रः प्रथमस्त्रिरात्रस्तर्हि प्रथमे विनियुक्ता एव गायत्र्या द्वितीय तृतीययो रह्नोः प्रयोगाच्च तस्य यातयामत्वम्भवेत् इति अत आह—प्रस्तुतच्छन्दा इति । सत्यं

तथापि प्रथमस्त्रिरात्रः प्रहृतच्छन्दाः प्रथमः हृतानि विस्तीर्णानि गायत्र्यादीनि छन्दांसि यस्मिन्निति तथोक्तः । प्रातःसवनस्य गायत्रत्वान्मध्यन्दिनसवनस्य त्रैष्टुभत्त्वात्तृतीयसवनस्य जागतत्वात्तेनैव छन्दोभेदेन सोऽयं त्रिरात्रः आयातयामा गतसारो भवतीत्यर्थः । अथ द्वितीय त्रिरात्रस्य छन्दोविभागेन यातयामत्वं दर्शयति—अथोत्तरस्येति । अथशब्दोवाक्योपक्रमे उत्तमस्य द्वितीयत्रिरात्रस्य छन्दांसि व्यूहन्ति व्यूहेन भिन्नानि कार्य्याणि तथैव विवरणं जगतीच्छन्दस्का: ऋचः प्रतिपद्यन्ते प्रारभ्यते आभिर्ऋग्भिः प्रतिपदा या भवन्ति तत्र वहिष्पवमानानामाज्यानां तरुतानाञ्च गायत्री गायत्राणां स्थाने जगत्यो भवन्ति जगतीनां स्थाने त्रिष्टुभो भवन्ति त्रिष्टुभां स्थाने गायत्र्यो भवन्ति तेनैव छन्दोव्यूहेन साम्यमयातयामा । अथ तृतीयत्रिरात्रस्यापि छन्दोव्यूहत्वेनायातयामत्वं दर्शयति—अथोत्तमस्येति । अथ उत्तमस्य तृतीय त्रिरात्रस्य छन्दांसि व्यूहन्त्येव कथम् । तत्र बहिष्पवमानाज्येषु त्रिष्टुभः प्रतिपदो भवन्ति । त्रिष्टुभां स्थाने जगत्यो भवन्ति तेनैव च सोऽयं तृतीयस्त्रिरात्रोऽयातयामा भवेदिति । यथोक्तमर्थं स्तौति—अभिचारत इति । एता विच्छिन्नच्छन्दस्का ऋचः । अन्योन्यस्यै लोकं व्यूहेन परस्परस्थानमध्यायन् अधितिष्ठन्त्येव एता विभक्तिपरिणामः एताभिः परस्परलोकं प्राप्ताभि ऋग्भिः काम मभीष्ट मेव यजमानो गमयति गच्छति। एतस्यैव विवरणं यस्मै कामायैष आक्रियत इति । यस्मै कामायैष कामं प्राप्नुमैष द्वादशाहः

आक्रियते। अनुष्ठीयते तं काम माप्नोति। अथ प्रथमत्रिरात्रस्य प्रस्तुतछन्दस्त्वं स्तौति—तस्माद्युजो इति। यतो यज्ञात्मकस्य रथस्य वाहनस्थानीयानि गायत्र्यादीनि छन्दांसि वैषम्येण भवन्ति। तस्माद्युजी विषमवलीगजाविकत्र युक्तौ सन्तौ सहैकसमानं न वहत इत्यनेन प्रथमेत्यत्र हे नवत्रयस्य यज्ञ वहन द्वारा प्रथम छन्दस्तुतं भवति। तस्माच्छन्दांस्यन्योन्यस्य स्थानप्राप्ताण्येव यज्ञद्वारेण वहन्ति। तत्तस्माल्लोके विपरीतौ कालभेदेऽन्योन्यस्थानं प्राप्तौ पूर्वाह्णे दक्षिणतो युक्तं मनड्वाहं विमुच्य मध्याह्ने तत्स्थाने उत्तरतोऽवस्थिते युक्ते स्थानेऽपि दक्षिणतःस्थिते युक्ते सति उभावपि वहां सौबोढ़तरौ भवत इत्यनेनोत्तरयोस्त्रिरात्रयोश्छन्दसां व्यूहनं भवति। यस्मान्नवरात्रस्य छन्दांसि विलक्षणस्थानावस्थितानि तस्मादेव उभयोरन्तोऽश्वादयः सहन्ते एकतोदन्तो गवादिभ्योऽधिकं गच्छतीत्यनेनोत्तरयोस्त्रिरात्रयोश्छन्दसां व्यूहनं भवति। यस्मान्नवरात्रस्य ऋक्छन्दसो स्थानवैषम्यं स्तुतं भवतीति वाक्ये त्रयस्याप्यर्थवत्ता। इदानीं प्रकृतिभूते द्वादशाहे परितोषिष्यतासुतम् अभिसोमास आयव इति साध्यासयोः प्रगाथयोः प्रगाथांशे प्रग्रथनेन त्रिष्टुबेकं साम गीयते। अध्यदध्यास्यायां द्विपदायाम्। अत्र द्वादशाहे विकृतभूतेन तथा अध्यायाम युक्तं चतुर्ऋचे साकमेव साम गेयमिति दर्शयितुमाह—तृचे वा इति। वसिष्ठादन्ये ऋषयः। तृचे ककुबुत्तरापदत्वया अतीते प्रगाथे विराजं तत्राद्या बृहती चतुष्पदा उत्तरे ऋचौ प्रत्येकं त्रिपदे इत्यनेन प्रकारेण पादाङ्गतो दशसङ्ख्या मपश्यन्। दशाक्षरा

विराड़िति श्रुतेः। वसिष्ठस्तु साध्याख्ये चतुर्ऋचे विराज मपश्यम् भवत्येवम्। अनेन चतुर्ऋचसामकरणं कथं सिध्यतीत्यत्राह—तेन स चतुर्ऋचो इति। इति ऋचेम्यत् साम। एकर्चे एकस्यामृच्यन्यत्साम भवतीति यत्तेन सविवक्षित चतुर्ऋचो भवति। किञ्च चतसृष्वेकमेव एकं साम भवतीति यत्तएवात्र विवक्षितश्चतुर्ऋच इति। यदुक्तं चतुर्ऋचे साम गेय मिति तत् प्रशंसति—सामभूयांस मिति। तत्रैव गीयमानं साम भूयांसं पोषं महतीं पुष्टिं पुष्यति प्राप्नोति साम्नः पोष मनु पश्चाद् यजमानः पोषुकः पुष्टिमान् भवतीति। तदेतत्साम्प्रदायिक मित्याशङ्क्य श्रुतिः स्वयमेव पूर्वाचार्य्याणां सम्मतिं दर्शयति—एतद्धस्माह मुञ्ज इति। सामश्रव सः सानश्रवाः कश्चिदृषिः तस्यापत्यं सामश्रवसो मुञ्जनामा श्रोत्रियः। एतद्वक्ष्यमाण माह स्म तस्यैव प्रदर्शनं यच्चतुर्ऋचे साम एतमेव साम्नः पोषं वयं विद्म जानीमः इति यस्मात्तस्मादद्य मप्रति गृह्णन्तः ऋतेपि धनादिपरिग्रहं निरपेक्षाः सन्तः सहस्रपोषाद परिमितायाः पुष्टेऽनव्यचामहे प्रचुरता न भवेमहीति शब्दो मुञ्जस्य वाक्य समाप्तिद्योतनार्थः। यथोक्तस्य दार्ढ्यार्थं माचार्यान्तरमतं दर्शयति—तदु ह स्माहेति वासिष्ठो वसिष्ठगोत्रोत्पन्नश्चैकितानेयो नामत स्तदेवाहस्म। कथं साम हैव चतुर्ऋचे क्रियमाणं सामैव नूनम् अपश्यं भूयांसं पोषं पुष्यति तं साम्नः पोषमनु यजमानोऽपि पोषुको भवति किं चतुर्थी अध्यायस्या ऋक् असाम्नीति सा ऋक् सामरहितेति पदेतु विधवाया गतभर्त्तृकाया जन्म निरर्थक मेवेत्येव मेव एते

चतुर्ऋचे साम गायन्ति श्रोत्रिया विदुः जानन्तीति । अपिच यस्माच्चतुर्थ्यां ऋचाश्रितसामकरणं विधवाजन्मसदृशं तस्मादेतेषां ऋचे अन्यदध्यास्यायामन्यत्साम । एवं कुर्वतां कुले श्रोत्रियाश्रिताचारसम्पन्ना युवानश्च सन्तो मानुषाः पुनः । शतसंवत्सरलक्षणात् पुरा पूर्वमेव प्रमायुका मरणशीला भवन्ति । अतएव तेषां जायाः सत्यः विधवा भवन्ति तत्रैव हेतुप्रदर्शनम्—हि यस्मात् ऋचेऽन्यत्साम एकर्चं मध्यास्याया मन्यद्भवतीति अतो यदेव चतसृषु एकं साम क्रियते स एवात्र विवक्षितश्चतुर्ऋचः इति शब्दः चैकितायने वाक्य समाप्त्यर्थः । एतच्चतुर्ऋचे सामगानं पृष्ठ्यः षडहस्य तृतीयेऽह्नि छन्दोगाना मह्नां मध्यान्तिमयोरह्नोर्माध्यन्दिनपवमाने वेदितव्यम् । एवं चतुर्ऋचे साम विधायेदानीं अस्मिन्नेव द्वादशाहे सवनीया एकादशिन आग्नेयकृष्णग्रीवाद्याः पशवः प्रत्यह मेकैकश आलभ्यन्ते । उत्तमेऽहनि एकः पशुरालब्धव्यः एकः सवनीय इत्यपेक्षायां विकल्पेनालभ्यं पशुं दर्शयितुं प्रथमं पक्षं तावदुपन्यस्यति—पशुरतिरिच्यत इति । उदयनीयेऽह्नि यः पशुरालब्धत्वे नातिरिच्यते स ऐन्द्राग्न आलभ्यः इतीन्द्राग्नौ देवता यस्य स तथोक्तः । यथोक्त मर्थं प्रशंसति—इन्द्राग्नो इति । देवानां मध्ये इन्द्राग्नौ ओजिष्ठौ ओजस्वितरौ ता वयातयामा वप्रति हतसामर्थ्याविव तत्तस्मात्ताविव तद्युनक्ति यागेन यजमानः स्वर्गस्य लोकस्य समष्ट्यै प्राप्त्यै । पक्षान्तरमाह —सौर्यमिति । यो ब्रह्मवर्चसकामः स सौर्यं सूर्यदेवत्यं पशुमालभेत । तत्प्रशंसति—एतस्यामिति एतस्यां प्रसिद्धायां पशुसम्बन्धिन्या मेकदेशिन्यामादित्याः स वै सूर्य-

मजनयत् सूर्यस्तस्या तत्तेज: प्रकाशं ब्रह्मवर्चसञ्चावारुन्धन्य-दधात् अतो यएवं वेद स तेजस्वी ब्रह्मवर्चसी भवति। कल्पा-न्तरं दर्शयति—अथोखल्विति। अथो अथवा ब्रह्मवादिन एव माहु:। इदानीं येऽन्ये ऽङ्गि आग्नेयो ऽग्निदेवत्यं बालभ्र उ खलु। यस्मादग्निर्वै अग्निरेव सर्वा देवता: तत्सम्मुखत्वात्तेन सर्वासां देवतानामन्तरा मध्ये काञ्चन अन्यां देवतां न कुर्य्यादिति शेष:। इति शब्द: पक्षान्त-राभावद्योतनार्थ:। अतएव भगवानापस्तम्ब:—आग्नीय मुद्‌यनीये ऐन्द्राग्नं वा सौर्य्यं ब्रह्मवर्चसकाम इति ॥१॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीय ब्राह्मणे
चतुर्थप्रपाठके प्रथम: खण्ड:।

---

## अथ: द्वितीय: खण्ड: ।

अत ऊर्द्ध्वमनुवाकचतुष्टयेन श्येनादिनामकाश्चत्वार आभि-चारिका यज्ञा: विधीयन्ते। तत्र प्रथमं श्येन यागं विधातुं प्रतिजानीते—अथेषेति। अथ विकृतिभूतव्यूढद्वादशाह धर्म्म निरूपणानन्तरं प्रसङ्गादेष वक्ष्यमाण: श्येनस्य विकृति-भूतश्येनाख्यो यागो निरूप्यते। एवं प्रतिज्ञाय श्येनयागं विधत्ते—अभिचरन् भ्रातृव्यहिंसां भावयेदित्यर्थ:। ननु भवेदेवं यदि श्येन शब्द: कर्म्मनामधेयं स्यात् नत्वेवं पक्षि-विशेषेऽत्यन्त निरूढत्वादतो ज्योतिष्टोमादौ गुणविधि:। यद्यपि तत्रोत्पत्तिशिष्टं सोमादि द्रव्यमस्ति तथापि काम्य-

त्वादनेन तस्य बाधः गोदोहनेन वा चमसस्य। अथवा श्येनविशिष्टं कर्म्मान्तर मत्र विधीयते श्येनवता यजते किमर्थं लक्षणाया असिद्धार्थकल्पनातो मत्वर्थलक्षणापि श्रेयसी। यद्यपि यथा श्येन आददीतेत्यादिवाक्यशेषप्रति॰ पादित साद्दृश्येन कर्म्मणि गौणी वृत्तिः श्येनशब्दः सम्भवति तथापि तस्याऽत्यन्तविप्रकृष्टार्थत्वात् स्वार्थपरित्यागे श्रुति- बाधाच्च मत्वर्थलक्षणैव युक्ता। अतः सोमेन यजेतेति सत्यपि गौरवे मत्यभावाद्विशिष्टविधिरेवेति तदनुपपन्नम्। गुण- विधिपरत्वे एव गुणो विधीयते स एव स्तोतव्य इति श्येन द्रव्यस्यैव स्तुतिः स्यात् न चात्र यथा श्येन आददीतेत्यादि वाक्यशेषे तस्य स्तुतिः स्वेनैव स्वस्योपमानेन स्तुतेरयुक्तत्वा- दतः व्यपदेशात्मक वाक्यशेषनैरर्थ्यपरिहाराय विप्रकृष्टार्थ- यापि गौण्या वृत्या श्येन शब्दः कर्म्मणि वर्त्तते। अतः सति सम्भवे गौरवात् सोमादिवद्विशिष्टविध्यङ्गीकरण मयुक्त मित्य- लमतिप्रसङ्गेन। अतः श्येननामधेयेन यागेन शत्रुहिंसां भावयेदित्ययमेवार्थः। श्येनशब्दस्य यागे प्रवृत्तिनिमित्तं दर्शयितुं स प्रसिद्धं श्येनसाद्दृश्येन यागं स्तौति—श्येनोवै इति। वयसां पक्षिणां मध्ये श्येनाख्यः पक्षी क्षेपिष्टः क्षिप्रतमः किञ्च श्येनो निपत्य पक्ष्यन्तराणि हन्तु माददीत स्वीकरोति एव मेवाभिचरन् एनं भ्रातृव्य मेतेन यागेना॰ दत्ते। यद्यथा आदाने मरणकरणता प्रतीयते। तथापि तदादानस्य हिंसार्थत्वाद्भ्रातृव्यं हिंसाकरणतैवात्र विधेया। ततः पवमानेषु प्रशंसति त्रिवृत् स्तोमं विधीयते —त्रिवृद् वै स्तोमानामिति। यद्यस्मात् स्तोमानां मध्ये

त्रिवृत् स्तोमएव क्षेपिष्टः फलदाने चिप्रतमः तस्मादाशीयः। आशुरस्तृणु वे हिंसायां भ्रातृव्यं हिनस्तीति त्रिवृद् भवन्तीति त्रिवृदेव स्तोमः कार्यः पवमानान्यः प्राकृतः पञ्चदशादिस्तोमः कार्य इत्यर्थः। प्रकृतिता विशेषान्तरं विधत्ते—रथौ हविर्द्धाने इति। अत्रत्य हविर्द्धाने रथौ भवतः। यथा च प्रकृतौ हविर्द्धाने शकटाकारे न तथा—किन्तु रथाकारे कुर्य्यादिति। तत्रासति अस्मै भ्रातृव्याय वज्रं चतुर मायुधं परिकरेण रथात्मकं हिंसा साधन मेव प्रवर्त्तयति स्तृत्यै भ्रातृव्यस्य हननायेति। तत्र साम विधत्ते—वषट्कारणिधनमिति। पुनानः सोमधारयेत्येतस्यामृचि वषट्कारणिधनं साम कुर्य्यादित्यर्थः। तत् प्रशंसति—एष वै वज्राणामिति। वज्राणां हिंसासाधनाना मायुधानां मध्ये एष अयमेव ओजिष्ठः अजिस्वितमः। अयं सामात्मको वज्रः किञ्चामुं वषट्कारं वहवो होत्रादयो वषट्कुर्वन्ति प्रयुञ्जते। सर्वे निधनमुपयन्तीति वचनात्। सोऽयं वज्रः तमेव भयात्मकं वज्र मस्मै भ्रातृव्याय प्रहरति साम्ना वषट्कारेण निधनेनेति शेषः। स्तृत्यै भ्रातृव्यहननायेति। सप्रशंसं विशेषान्तरमाह—उभे बृहद्रथन्तरे चित इति। ब्रह्मसाम बृहद्रथन्तरं होतुः पृष्ठं ते उभे अत्र भवतः। ताभ्या मुभाभ्या बृहद्रथन्तराभ्यामेवास्मै वज्रं हिंसासाधनं प्रहरति स्तृत्यै। तस्येति उक्ते बृहद्रथन्तरे पराचीष्वेव कुर्य्यादिति। नियमयति—पराचीष्विति। यदा पृष्ठस्थाने रथन्तरं क्रियते तदा पृष्ठत्रिकत्वादनभ्यस्तासु तिसृष्वृचु रथन्तरं साम भवति।

एतद्ग्रहण मुपलक्षणम् । बृहदपि पराचीष्वेव कुर्य्यादित्यर्थः । अथोक्तार्थं प्रशंसति—पराञ्चमेवास्मै इति । तथा सत्यस्मै भ्रातृव्याय पराञ्च मनावर्त्तमेव वज्रं प्रहरति तस्य स्तृत्यै । एवं भ्रातृव्य हिंसाकारस्य होतुः पृष्ठं रथन्तरं ब्रह्मसाम बृहदिति दर्शयित्वेदानीं जीवत एव भ्रातृव्यस्य पश्वादिराहित्य मिच्छतो यजमानस्य प्रयोगं दर्शयति—यं कामयेतेति । यं भ्रातृव्यं जीवन्तं जीयन्तं पश्वादिभिर्हीयेतेति यो यजमानः कामयेत तस्य होतुः पृष्ठं बृहत् कुर्य्यात् । ब्रह्मसाम रथन्तरं यतः क्षत्रं वीर्यमेव बृहत्त बृहत्त्वात्पशव एव रथन्तरः । कार्यकारणभावात्तस्मात् क्षत्रेणैवास्य भ्रातृव्यस्य पशून् हन्ति । तथा सति भ्रातृव्योऽपशुः पशुरहितो भवति । अन्तः क्षीयते क्षयं प्राप्नोति । अथ जीवत एव भ्रातृव्यस्याप्रतिष्ठाकामस्य यजमानस्य प्रयोगं विधत्ते—यं कामयेतेति । यं भ्रातृव्यं परम्परागतमिति दूर मियाद्गच्छेन्नापि प्रति तिष्ठेदिति यो यजमानः कामयेत तस्य पवमाने रथन्तरं साम कुर्य्यात् तदेतदाह द्राह्यायणः पवमाने रथन्तरं कुर्य्यादिति । बृहत्या मेकर्चानां स्थाने स्यादेकं तद्धि बार्हतानां स्थानमिति । अस्यार्थः—श्येनकल्पे ये बृहत्यां एकर्चाः कल्पकारेण क्लृप्ताः पुनानः सोमधारयेति वषट्कारनिधनमेकस्यां रौरवमेकस्यां यौधाजयमेकस्यामिति तेषां स्थाने रथन्तरं कार्यं तद्धि बार्हतानां साम्नां स्थाने रथन्तरञ्च बृहत्यामुत्पन्नमिति । तथा बृहत्पृष्ठं कुर्य्यात् ब्रह्म साम प्लव साम कुर्य्यात्ततश्च एनं भ्रातृव्यं बृहद्रथ-

मराभ्या मेव एभ्यो लोकेभ्य उद्धृत्य प्रवेन साम्ना प्लावयति गमयति अप्रतिष्ठं कुर्य्यादित्यर्थः। सोऽपि परां परावतं अतिदूरमेति गच्छति न प्रतितिष्ठति। पुनर्भ्रातृव्यहिंसाकामस्यैव प्रयोगविशेषं दर्शयति—वार्षाहरे इति। पवमानमुखे माध्यन्दिनार्भवयोः पवमानयोर्मुखे वार्षाहरे एतं नामधेये सामनी भवतः। गायत्रसाम ऊर्द्धं वार्षाहरयोः साम्नोः सर्वत्राप्यच्युतत्वात् कथं माध्यन्दिनपवमाने अग्नीसोमच्युमत्तम इति एकस्यां गायत्रं परस्यां वार्षहर मार्भवपवमाने तु यस्ते मदोवरेण्य इति गायत्रवार्षाहरे एकस्यामेवेति कल्पकारवचनं निश्चीयते। तथा सफौपगवे सामनी एव पवस्वेन्द्रमच्छेति अनयोर्ऋचयोर्मानदं पुरोजितीवो अन्ध इति अस्यामृचीति क्रूराणि भ्रातृहिंसकानि सामानि सम्भरन्ति उद्गातारः सम्पादयन्ति स्तुत्यैर्भ्रातृव्यस्येति। अथानुवाकशेषे यूपादीनां श्येनयागे प्रकृतेभ्यो विकाराभिधीयन्ते। तत्र प्रकारधर्मं यूपस्य विकारं दर्शयति—तैल्वको वा इति। तैल्वको नामाश्वीरः कश्चित् वृक्षविशेषः। तद्विकारी वाधको वा नाम राजवृक्षः तद्विकारी यूपः कर्त्तव्यः। ततास्याग्रं हननसाधनं पच्चायुधं तदाकाराग्रसदृशश्चषालं यूपं कुर्य्यादित्यर्थः। तथाच द्राह्यायणः—यूपस्याग्र इति। अचषालः स्यादिति वा। अधिषवणफलयोर्विकारं दर्शयति—येन शकटेन शवं नयति तस्य च फलयोर्मध्यमे फलके शवनभ्य नाभिशब्दस्य नभादेशश्च। तेऽधिषवणफलके कुर्य्यात्। तथाच द्राह्यायणः—येन यागेन मृतं निर्ह-

रेयुस्तस्य नभ्ये अधिषवणफलके कुर्युरिति। सवनीयपशौ विशेषं दर्शयति—अग्नये रुद्रवते इति। योऽग्नये रुद्रवते सवनीयः। पशुः स लोहित वर्णो भवेत्। उपांश्वन्तर्यामौ ग्रहयोः सादनविशेषं दर्शयति—सादयन्तीति। उपांश्वन्तर्यामाख्यौ ग्रहौ प्रकृतौ होमानन्तरं सादयन्ति। अत्र न तथा किन्तु होमात् पूर्वं सोमग्रहणानन्तरं सादयन्ति सादनं कुर्युः। बर्हिर्विशेषं दर्शयन्ति—शरमयमिति। शरः समुदण्डो गुणविशेषः तन्मयं बर्हिः कार्यं शौर्त्यैर्भ्रातृव्यहिंसार्थं शीर्त्या इति शरस्तुतिः। उभयोरपि शृणातिनिष्पन्नत्वेन शब्दसामान्य मिश्वविशेषं दर्शयति—वैभीतक इति। विभीतको कौचदारुः तद्विकारी वैभीतकः स इध्मः कार्य्यः। विभीत्यै भ्रातृव्यस्य। अत्रापि शब्दसाम्याद्विभीतकश्रुतिः। ऋत्विक्षु धर्मविशेषमाह—लोहितोष्णीषा इति। येऽत्र ऋत्विजस्ते लोहितवर्णमुष्णीषं शिरोवेष्टनं तेषां ते तथोक्ताः तथा लोहितवाससः परिधानीयश्च येषां ते तथोक्ताः तथा निवीताः कर्णलम्बिताः ब्रह्मसूत्रोत्तरीयाः सन्तः प्रचरन्ति कर्म्मानुतिष्ठेयुरित्यर्थः। स्तृत्यै भ्रातृव्यस्येति। ऋत्विग्दक्षिणाविशेष माह—नव नवेति। नव नव दक्षिणा इति नव वर्गान्यथोक्ताहं दद्यादिति तत्प्रशंसति—नावयन्तीति। तत्र न यथोक्तदक्षिणादानेन एनं भ्रातृव्यं नावयन्ति शरीरान्तरप्रापणेन न्यूनतमं कुर्वन्त्येवेत्यर्थः। श्येनप्रयोगं सविशेषं कल्पसूत्रकारो दर्शयामास। पवमानस्य जिघ्नतः। पुनानो अक्रमीदभि। पवमानस्य ते कवे। अग्निर्वृत्राणि जङ्घ-

नत्। मित्रं हुवे पूतदक्षम्। उत्वा मदन्तु सोमाः। ता हुवे ययोरिदम्। अर्षा सोम द्युमत्तम इति गायत्र मेकस्याम्। वार्षाहर मेकस्याम्। शाक्करवर्णमेकस्याम्। पुनानः सोमधारया वषट्कार निधनमेकस्याम्। रौरवमेकस्याम्। यौधाजयमेकस्याम्। औशनमन्त्यम्। रथन्तरञ्च वामदेव्यञ्च बृहच्च कालेयञ्च। यस्ते मदोवरेण्य इति गायत्रवार्षाहरे पवस्वेन्द्रमच्छेति सफौपगवे पुरोजिती वो अन्धस इति नानन्दान्धीगवे काममन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम त्रिवृतः पवमाना अग्निष्टोम साम च तिसृभिराज्य पृष्ठानीति। अस्यायमर्थः—तिसृभिराज्यानि इति पृष्ठानीति॥ २॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
चतुर्थप्रपाठके द्वितीयखण्डः।

---

## अथ तृतीयखण्डः।

एवं श्येनयागं सविशेषं प्रतिपाद्य इदानीं त्रिवृदग्निष्टोमं निरूपयितुं प्रतिजानीते—त्रिवृदग्निष्टोम इति। उच्यते इति विशेषः। इदानीं विधत्ते—तस्येषुमिति। तस्य त्रिवृदग्निष्टोमस्य इषु संज्ञकां विष्टुतिं कृत्वाऽभिचरन् भ्रातृव्यञ्जिघांसुस्तेन द्वे इषु संज्ञके विष्टुती प्राक् प्रदर्शिते अत्र विशेषश्रवणात्तयोरन्यतरा ग्राह्या। यथोक्तं प्रशंसति—इषुबधो वै इति। यतः इषुबधः इष्वाख्यं

हननसाधनं अथायुध मायुधः शतवर्षलक्षणात् पुरा पुरस्तादेवं हन्ति। तस्माद्यदिषु दृष्वाख्यं विष्टुतिमत्र करोति कुर्यात् तर्ह्येनं भ्रातृव्य मायुषः पुरैव प्रवृत्ततया विष्टुत्या प्रकर्षेण छिनत्ति। तत्त्रिवृत्स्तोमं प्रशंसन् विधत्ते—त्रिवृद्वै स्तोमानामिति। यस्मात्स्तोमानां स एव क्षेपिष्टः अत आशीयः अत आशुतर भ्रातृव्यं स्तृणवै हिंसानीति त्रिवृदेव सोमो भवति नान्य इत्यर्थः। सामविशेषं दर्शयति—वषट्कारनिधनं भवतीति। व्याख्यातचरम्। यद्यपि समानमितरं तेनैव वषट्कारनिधनं सिद्धं तथापि न वचनं पवमाने रथन्तरं कुर्य्यात् वृहत्पृष्ठं स्नवं ब्रह्मसामेति विहितस्य धर्मविशेषस्याप्राप्तत्रर्थम्। सामविकारं प्रशंसन् विधत्ते—सप्तहं भवतीति त्वामिद्धिहवामह इत्यस्यामृचि सप्तहं सप्तहं नामकं साम भवति। पृष्ठस्य तेन साम्ना सप्तहात्पुरुषादभिविधावाङ् सप्तपुरुषपर्यन्तं सोऽनायतनो भवति। अनायतनो भवति अप्रतिष्ठितो भवति। यद्भ्रातृव्य मेतेन यागेनाभिचरन्ति। अनेनास्य साम्नः सप्तहनामकत्वं दर्शितं भवति सप्तपुरुषहननसाधनत्वप्रतिपादनात्। यद्वा तस्य त्वामिद्धिहवामा इत्यस्यां गानेन सप्तहकारसम्पत्तेः सप्तहनामकत्वं द्रष्टव्यम्। एवं विशेष मत्र उक्त्वा इदानीं श्येनवैशेषिकधर्म्मानतिदिशति—समानमिति। ये श्येनयागे वैशेषिकलोहितोष्णीषत्वादयो धर्म्मा विहिताः ते सर्वेऽप्यत्र कार्या इत्यर्थः। नन्वितरशब्दस्य सन्निहितत्वाच्छ्येनवैशेषिकधर्म्माणाञ्च सन्निहितत्वेन तद्वाचकत्व मयुक्तम्। किन्तु

अतिदेशतः । प्राप्ता ये ज्योतिष्टोमधर्म्मास्ते श्येनेऽपि विद्यमानाः तत्साहश्यमत्ना पादयन्तीति तदनुवादो युक्त इति चेत् न सत्यमितरशब्दः सन्निहितपरः न तु तन्मात्रपरः । वस्तु: अपितु यत्पूर्वोक्तसदृशं सन्निहितं तदेवेतरशब्दे आचष्टे । तथा सति यश्चोदकप्राप्तं ज्योतिष्टोमिकं धर्म्म माननत्पूर्वं निर्दिष्टं सप्तहादिधर्मसदृशमेव प्रकृताः लोहितोष्णिषादयः श्येनवैशेषिका वैशेषिकधर्मत्वेन सदृशास्तेन सन्निहित मपि ज्यौतिष्टोमिकं धर्मजातं परित्यज्य सादृश्यमादाय श्येनवैशेषिकाणा मेवं लोहितोष्णिषत्वादीना मभिधानमिति युक्तं उद्दिश्यामः इति ॥ ३ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे चतुर्थप्रपाठके तृतीयखण्डः ।

---

## अथ चतुर्थ खण्डः ।

अथ सन्दंशाख्यं यागं प्रतिजानीते—अथैष सन्दंश इति । अथानन्तरमेष वक्ष्यमाणः सन्दंशः आदानग्रहणसाधनत्वेन सन्दंशसाम्यात् सन्दंशाख्यो यज्ञः उच्यत इति । विशेषत्वं विधत्ते—अभिचरन्निति । तेन सन्दंशयागेनाभिचरन् जिघांसुर्यजेत तत्सादृश्यादयं क्रतुः सन्दंशः तेन क्रियत इत्यत्राह यद्वै दुरादानमिति यद्दुरादानं तप्तायः पिण्डादि तत्सन्दंशेन आदत्ते लोहकारः । किमत्र सन्दंशसादृश्यं कथं च सन्दंशवदनेन क्रियत इत्यत्राह—यत् द्वौ द्वौ

स्तोमाविति। द्वे त्रिवृती स्तोत्रे द्वे द्वादशे द्वे एकविंशे द्वे चतुर्विंशे द्वे त्रिणवे इत्येवं द्वौ द्वौ स्तोमौ समानौ यत्र द्व भवतस्तेनायं क्रतुः सन्दंशसदृशः ततश्च यथाह—यथा खलु दुरादानमादातुमशक्यं तन्नायः पिण्डादि सन्दंशेनानुद्वायस्य पर्यायाद्विहितं रयाव एनं भ्रातृव्यमेतेन यागेनादत्ते अस्मिन्यागे सर्वेषां स्तोमानां त्रिवृत्स्तोमसम्पत्तिं तदीयानां स्तोत्रीयाणां बृहतीसम्पत्तिं चानूद्य प्रशंसति त्रिवृतं स्तोमं सम्पद्यत इति। अतः स्तोमगणस्त्रिवृत्त्वं स्तोमं सम्पद्यते स्तोत्रीयाणां गणो बृहतीच्छन्दः सम्पद्यते। तत् त्रिवृद्वज्रो वै वज्र एव। बृहती पशवः तेनास्य पशून् वज्रेणैव हन्ति तथा सति भ्रातृव्योऽपशुर्भवतीत्यत्र त्रिवृतः सम्पत्तिरेव द्वे त्रिवृती स्तोत्रे इत्यादिना प्रदर्शितानां स्तोमानां त्रिवृत्त्रिणवयोश्चाश्मै त्रिवृत इति त्रिवृत् सम्पत्तेरसिद्धत्वात्। न वक्तव्या त्रिवृत्त्रिवृतयोश्चाश्मै ३६ चत्वारस्त्रिवृता इति। द्वादश पञ्चदशा एकविंश चतुर्विंश द्वाभ्यां द्वादशाभ्यां द्वाभ्यां पञ्चदशाभ्यां नवतिरित्यतो दश त्रिवृतः सम्पद्यत इति बृहती सम्पत्तिस्तु यथोत्तरया चतुर्विंशति सङ्ख्या त्रिवृद्भिः स्तोत्रीयाणां षोड़शोत्तरया शतद्वयेन २१६ षट्बृहत्यः सम्पद्यत इति। स्तोत्रविकारं प्रशंसन् विधत्ते—वैयश्वं भवतीति। पुनानः सोमधारयेत्यस्या ऋचि वैयश्वम्। वियश्वः कश्चिदृषिः तेन दृष्टं साम वैयश्वं भवेत्। तेन एनं भ्रातृव्यं व्यश्वविगताश्वमेव करोति शब्दसाम्यात् स्तुतिः। तदेव प्रकारान्तरेण स्तौति—परिष्टुब्भेदं भवतीति। वैयश्वमेव साम यतः

परिष्टुब्धैडेति निधनं यस्य तत्तथोक्तं योऽन्याया ऋचि इडेति निधनं अतस्तेन एनं भ्रातृव्यं परिवृश्चत्येव। पुनः प्रयोगविशेषं दर्शयति—वार्षा हरी इति। पवमानमुखे माध्यन्दिनार्भवयोः पवमानयोर्मुखे वार्षाहरे सामनी भवतः। माध्यन्दिनपवमाने अर्षासोमद्युमत्तम इत्येकस्यां गायत्रवार्षाहरे आर्भवे तु यस्तोमदोवरेण्य इत्यत्र वार्षाहर मिति वचनात्तथा पवस्वेन्द्रं गच्छेत्यनयोः ऋचोः काशीतीपगवे सामनी पुरोजितीवो अन्धस इत्यत्र नानदं साम क्रूराणि हिंसाकारीणि सामानि सम्भरन्ति उद्गातार उत्पादयन्ति सम्पादयन्ति स्तुत्यै अत्र व्यश्वेति। तत्र प्रकृतितः प्राप्तं सप्तदशस्तोमं निषेधति—सप्तेति। अयं सन्दंशाख्यो निःसप्तदशः सप्तदशस्तोमेन हीनः कार्यः तेन पशव्यः सप्तदशस्तोमराहित्येन क्रूरः कार्यः भ्रातृव्यस्य पशून्विकरोतीति। अत्र श्येनवैशेषिकान् धर्मानतिदिशति—समानमिति। व्याख्याततरमेतत्। अत्र कल्पः—श्येन माज्यं बहिष्पवमानमर्षासोमद्युमत्तम इति गायत्रवार्षाहरे पुनानः सोमधारयेति वैयश्वमेकस्यां वषट्कारणिधनमेकस्यां रौरवमेकस्यां यौधाजयं तिसृष्वौशन मन्त्यं रथन्तरं च वामदेव्यं च सप्तहं च कालेयं च यस्तेमदोवरेण्य इति गायत्रं वार्षाहरे सत्रासाहीयं पवस्वेन्द्रमच्छेति काशीतीपगवे पुरोजितीवोऽन्धस इति नानदान्धीगवे सामत्रयाणां यत् प्रथमं काव मन्त्यम् यज्ञायज्ञीय मग्निष्टोमसाम द्वे त्रिवृत्स्तोत्रे द्वे द्वादशे द्वे पञ्चदशे द्वे एकविंशे द्वे चतुर्विंशे द्वे त्रिणव इति अत्र सामत्रयाणां यत्प्रथममित्यस्य

वाक्यशेषस्याय मभिप्रायः। उऽ२। अस्२। फठ्२। इस्२। हस्२। प्रायश्चक्रमिति योनावुत्पन्नं पुरोजितीवो अन्धस इत्यस्मिं स्तुचे ॥ ४ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
चतुर्थप्रपाठके चतुर्थखण्डः।

---

## अथ पञ्चमखण्डः।

अथ प्रतिज्ञापूर्वकं वज्रयागं दर्शयति—अथैषवज्र इति। अथानन्तर मेष वक्ष्यमाणो वज्रो वज्रसादृश्याद्वज्राख्यो याग उच्यत इति शेषः। एतेन वज्रेणाभिचरन् भ्रातृव्यजिघांसुर्यजेत वज्रसङ्घातात्मकत्वादयं वज्रो यज्ञः सङ्घातिनां स्तोत्रीयाणां वज्रात्मकत्वात्तेन वज्रेणैव वय मस्मै भ्रातृव्याय प्रहरति स्तृत्यै तस्य हितार्थम्। के पुनः समुदायिनो वज्रा यत्समुदायो वज्र इत्याशङ्क्य तद्विवक्षुराह—सर्वः पञ्चदशो भवतीति अस्य सर्वाण्येव रूपाणि स्तोत्रीयाणि पञ्चदशानि। तेन सर्वोऽप्यवयवी पञ्चदशो भवतीति। किं तत इत्यत्राह—वज्रो वै इति। पञ्चदशो वै वज्र एव ऐन्द्रत्वसाम्यात् अतस्तदवयवानि स्तोत्राण्यपि वज्र रूपाणि। तेन तं प्रसिद्धं हिंसासाधन मेवास्मै भ्रातृव्याय प्रहरति स्तृत्यै। तद्धर्मविशेषं दर्शयति—उक्थ्यः षोड़शिमान् भवतीति। उकथ मर्हतीतित्युक्थः। उक्थार्हः उकथवान् भवतीत्यर्थः। किञ्च षोड़शिमान् भवतीति तदुभयं स्तौति। पशवो वा उकथानीति। उक्-

थानि पशवो वै पशव एव तत्साधनत्वात् षोड़शी वज्रः षोड़शिमानुष्टुप् कुर्वन्तीति वचनात् षोड़शिना सानुष्टुप् वै वाग्वा अनुष्टुव्वाचि वज्र इति प्रशंसनात्। षोड़शिनो वज्रत्वेन तेन वज्रेण वज्रमस्मै भ्रातृव्याय प्रहरति स्तृत्यै भ्रातृव्यपशूनां रथानां पशुरूपत्वेन श्रुतेरर्थवत्वात् येभ्यो गन्तव्यं तत्र षोड़शिसाम्नः। अक्षरेषु गानं दर्शयति—तस्य महानाम्नय इति। तासु षोड़शिसाम कुर्यादित्यर्थः। तदेतत् प्रशंसति—वज्रो वै महानाम्नय इति। महानाम्न्यो वज्रः। ऐन्द्रत्वसाधर्म्यात्। सनः पर्षदति द्विष इति लिङ्गाद्द्वेषोघ्नत्वसाम्याद्वा षोड़शी वज्रः। षोड़शिनो वज्रत्वं प्रागेवाऽदर्शि। तस्माद् वज्रेणैव वज्रमस्मै भ्रातृव्याय प्रहरति स्तृत्यै। तस्य सन्दंशवैशेषिकधर्मान् अतिदिशति—समानमितरत् पूर्वेणेति। पूर्वेण अनन्तरोक्तेन सन्दंशेन इतरत् गानं सन्दंशे ये विशेषधर्मा विहितास्ते अत्र कार्या इत्यर्थः। अत्र कल्पः—पवस्वेन्दोवृषासुतापञ्चत्यवते सृध इति पुरस्तात्पर्यायस्य तृच उद्धरति। सत्रासाहीयं पुरोजिती वो अन्धस इति नानद मेकस्यां तस्या मेवान्धीगवं श्यावाश्व मेकस्यां सामेकस्यां त्रयाणां यद् द्वितीयं प्रमंहिष्ठीयमौपगवमुद्वंशीयं महानाम्नः षोड़शिसाम समानमितरत्पूर्वेण सर्वः पञ्चदशः क्लृप्तो ज्योतिष्टोमः प्रकृतिभूतज्योतिष्टोमः कार्य्य इत्यर्थः ॥ ५ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे चतुर्थप्रपाठके पञ्चमखण्डः।

अथ सप्तखण्डः ।

अथ पञ्चदशोक्तब्राह्मणाभ्यां त्रयोदशाहं वैश्वदेवाख्यं सत्रं निरूप्यते—तत्राहःक्लृप्तिं दर्शयति—अतिरात्रं इति । अतिरात्रं चतुर्विंशस्तोमयुक्तं प्रायणीय मह्हरिति । एते प्रथमे अहनी अभिजिदाद्यो विश्वजिदन्तो मध्यमो नवरात्रः महव्रत मतिरात्र इत्यत अन्तिम अहनी इति । तदेतत्सर्वं विश्वजिदेव कर्त्तृत्वेन च प्रशंसति—विश्वे-देवा इति । राजा दीप्तेन सोमेन गृहपतिना सह विश्वे-देवाः सत्र मासतः एवं ब्रुवन्तोऽस्माकं सर्वत्र सर्वेष्वपि सोम एव राजा विभवैर्हिशेषे भूयादिति । अतएवं तस्मात् सोमो राजा सर्वाणि नक्षत्राण्युपैति प्राप्नोति सोमो हि । किञ्च हि यस्मात् सोमो रेतोधाः रसात्मकत्वे लोहितादि परिणामद्वारेण रेत आधाने हेतुरसावपि सोमो गृहपतिः किं शस्तमित्यर्थः । तदीयं मध्यमनवरात्रमित्यनुवदति—नवाहमिति । य एतत्सत्र मुपेयुः ते संवत्सरस्य प्रकृति-भूतस्य संवत्सर साध्यस्य गवामयनस्य विकृतित्वात्त्रयो-दशाहं सत्रमपि संवत्सरनाम्नोच्यते । तस्य गर्भं मध्यमं नवाह मुपयन्तीति । अनुदितमर्थं स्तौति—नवाहो वै इति । नवाहो वै अयं नवरात्र एव संवत्सरस्य सत्रस्य प्रतिमासदृशः तत्र अन्यानां सर्वेषां स्तोमानाञ्चात्राति-देशतो विद्यमानत्वात्तथा नवमाः । अथ नवाहो नवस-ङ्ख्याकाः प्राणाः सप्तशीर्षण्याः प्राणाः द्वाववाञ्चेति श्रुतेः । य एतं नवाह मुपेयुः ते नवप्राणानवरुन्धन्ते प्राप्नुवन्ति ।

प्रकारान्तरेण स्तौति—प्रजावन्तो इति। य एता रात्रीः। नवरात्रमित्यर्थः। उपयन्ति ते प्रजावन्तः। पुत्रपौत्रादियुक्ताः रेतोधा न हेतुसोमग्रहतिकयागानुष्ठाना जीवाः शतवर्षलक्षणपुरुषायुषश्च सन्तः प्राणात्मकनवरात्रोपायना ज्योतिः प्रकाशं कीर्त्तिं मश्नुवते प्राप्नुवन्ति। फलान्तरस्याधिकस्यात्रविधानादेत देव फलं रात्रिसत्रन्यायेने त्यवगन्तव्यम् ॥ ६ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
चतुर्थप्रपाठके षष्ठखण्डः।

---

## अथ सप्तमखण्डः।

वैश्वदेवं सत्रं निरूपयितु मादौ तत्प्रशंसार्थं देवादिविषया माख्यायिकामाह—प्रजापतिस्तपोऽतप्यत इति। प्रजापतिर्विधाता पुरा तपोऽतप्यत चकार। तस्य तप्यमानस्य विशुद्धस्येदानीं देवान् सृजेयमिति मनोबुद्धिः अजायत। ततस्त इमे प्रसिद्धा इन्द्रादिदेवास्ते वासृज्यन्त। कथं दिवा अहनि देवान् नक्तं रात्रौ असुरान् यद्यतो दिवा देवानसृजत प्रजापतिः तद्देवानां देवत्वमिति तेषां तदाभिमत्वं यद्यतो असूर्य्यं न विद्यते सूर्य्यो यत्तस्मिन् तदसूर्य्यं नक्तं कालाश्वनोरत्यन्तसंयोग इति यान् असृ-

जतेत्यनुषङ्गः तत्तेनासुराणा मसुरत्वं कर्म्मणि प्रकाशराहित्यं यद्यतः पापान इति ततः पीयन्त इति कर्त्तरि क्विप्। तेषां भावः पीतत्वं कव्यस्यामृतस्य पीतत्वं तत्तेन पितृणां पितृत्वम्। सन्त्वेताहृशादेशः किन्तत इत्यत्राह— देवा वै स्वर्गकामाः। ततस्ते देवा अग्निहोत्रात् स्वर्गं कामयमानाः सन्तः तपः अतप्यत तेषां तप्यमानानां तेभ्यस्तप्यमानेभ्यः पृथिव्यन्तरिक्षं द्यौरिति लोकत्रयात्मको रसोऽजायत। तत्सारभूताः पृथिव्यादयो लोका अपि अभ्यतपन्। ऋग्वेदादीनुद्दिश्य तपश्चक्रुः तेभ्यः तप्यमानेभ्यः ऋग्वेदात्मको रसोऽजायत। कथं पृथिव्या ऋग्वेदो रसः समजनि एव मुत्तरत्रापि ते ऋग्वेदादयः अभ्यतपन्। तेभ्यो गार्हपत्यात्मको रसोऽजायत। कथं ऋग्वेदाद्गार्हपत्योऽजायत। समान मन्यत्। गार्हपत्यादयोऽपि अभ्यतपन्। तेभ्यस्तप्यमानेभ्यः सहस्रशीर्षाः अपरिमितमूर्द्धा सहस्राक्षः असङ्ख्यातनयनः सहस्रपात् अपरिमितपादः पुरुषो रसोऽजायत। एवं चतुर्थरसात्मकत्वात् प्रशस्तः ततोऽयं पुरुष इत्यर्थः। भवत्वेवं ततः किमित्यत्राह— ते देवाः। ततः ते देवाः प्रजापतिं स्रष्टार मुपाधावन् उपेत्य च वेदशरीरैरृग्वेदाद्यात्मकैर्गार्हपत्यादिभिर्यदमृतशरीर मुत्पन्नं तदिदं मृत्योर्न समाप्नत समाप्तिं न प्राप्नोतीति शब्दस्त्वे तावद्द्योतनार्थः। स पुरुषः को नामकः खल्वासेत्येवं प्रजापति मब्रुवन्। अन्तिम इतिकारो देवानां प्रश्नपरिसमाप्तिद्योतनार्थः। प्रजापतिरुत्तरमाह— सहोवाच। स तैरेवं पृष्टः प्रजापतिरुवाच। यज्ञो नाम

अग्निहोत्रं यज्ञाना मग्निहोत्रं यज्ञ एव सोऽयं पुरुष स्ततोऽन्यत् किञ्चिन्नास्तीति तदिदं विविदिषति अग्निहोत्रं सद्यो यज्ञसंस्थात्वेन प्रशंसति—तेषाम् । तेषा मुपसन्नानां देवार्थं प्रजापतिः सद्यो यज्ञसंस्थामुपैति । सद्यः समाप्यमानयज्ञकाग्निहोत्रप्राप्नोतीत्यर्थः । अतएव एषोऽग्निहोत्ररूपो यज्ञ स्था समाप्त मुपैति प्राप्नोतीत्यत्र दीक्षणीयादीतिकर्तव्यताया अभावात् कथ मस्य यज्ञत्वमित्याशङ्क्य प्रसिद्धज्योतिष्टोमादि यज्ञसादृश्यसिध्यर्थमित्रादीक्षणीयादि इति कर्तव्यतां सम्पादयति—यद्गार्हपत्यम् । यद्गार्हपत्य मग्निं प्रादुःकरोति अग्निहोत्रार्थं प्रादुर्भावयति सा दीक्षणीया दीक्षणीयाख्येष्टिः उपकारत्वसाम्यात् । यत्समिधोऽभ्यादधने समिदाधानं कुर्वन्तीति यत्तदुपसदः उपसदाख्यो होमः । अथाग्निहोत्रे उत्पूताज्यस्कन्दने प्रायश्चित्तं दर्शयति—अथ यस्याः । अथ यस्याज्य मुत्पूतं स्कन्दति सा वैस्कन्नानाम हुत्वा यजमानः प्रमायुर्भवति मरणशीलो भवतीत्यर्थः । तस्मिन्निमित्त वरो देयः गोरूपां दक्षिणां दद्यादित्यर्थः । सैव दक्षिणा तस्यास्कन्दस्य प्रायश्चित्तिरिति प्रत्यवाय परिहारार्थं कर्मेत्याहुः ब्रह्मवादिनः । अनुत्पूताज्यस्कन्दनप्रायश्चित्तमाह—अथ यस्याः । अथ यस्य यजमानस्य सम्बन्धि आज्य मनुभूतं उत्पवनरहितं स्कन्दति पात्रमसावस्कन्नाना मस्कन्नरूपा आज्याहुतिः ततस्तेन चाहुत्वा यजमानस्य वित्तं प्रमायुर्भवति तन्निमित्तं नानाविधं द्रव्यं देयं सैव तस्या अनुत्पूतस्कन्नप्रायश्चित्तिरिति । अग्निहोत्रे सवनत्रयं सम्पादयति—यद्गार्हपत्ये । गार्हपत्ये·

ऽग्नौ जुहोतीति यत्तदेव प्रातः सवनम्। प्राशव्यसाम्यात्। एवमन्यदपि। यन्मार्जयते सोऽस्यावभृथ इति तत्रैवोदयनीयादि सम्पत्तिं दर्शयति—यदन्नाददाति अन्नादि हवींषि अन्ना ददाति यत्तेनोदयनीयस्य तदाख्यस्य कर्मण उदवसानीयस्य च समाप्त्यै कृतं भवतीत्यर्थः। अग्निहोत्र एव मन्थने अनुत्पादे विकल्पेन प्रायश्चित्तं दर्शयति—अथ यस्याग्निः। अथ पुनर्यत्तस्य यजमानस्य अग्निर्मथ्यमानो न जायेत तर्हि अन्य माहृत्य लौकिक मग्नि मानीय अन्यस्मिन्नवकाशे आहवनीयाग्नौ व्याहृतिभिर्जुहुयात्। लौकिकाग्नेरप्यभावे ब्राह्मणस्य हस्ते जुहुयात्। एवमन्यदपि व्याख्येयम्। तथाश्वलायनः—अग्निहोत्रकाले अग्नावजायमाने अन्यमानीय जुहुयात् पूर्वालाभे उत्तरोत्तरं ब्राह्मणपाण्यजकर्णदर्भस्तम्बाप्सु इत्याद्यग्निहोत्रे। स्वयं होमस्तुत्यर्थं गौणकर्तृपुरःसरमुत्तरोत्तराख्यान् कर्तॄन् दर्शयति। अन्यैः शत अन्यैः शिष्यादिव्यतिरिक्तैः। शताहुताच्छतशो हुतान् कृतान् होमा नपेक्ष्याशिष्य उक्तशिष्येण कृत एको होम वरः उत्कृष्टः। एव मन्यान्यपि व्याख्येयम्। नन्वेवं किन्तत इत्याह—स्वयं होता। यत एवमात्मकृतो होमः प्रशस्तः तस्मात् स्वयं होता। देवाना माह्वाता स्वयमेव दोहीत्यग्निहोत्रार्थं पयसां दोग्धा च स्वयमेव यजमानः स्वयमेवाग्निहोत्र मुपतिष्ठेत। तत्र दक्षिणां दर्शयति—होम्यशेषम्। होम्यशेषं हुतावशिष्टं हविरेव दक्षिणा नान्यदित्यर्थः यथोक्तमग्निहोत्रं प्रशंसति—सर्वैर्ह वा। य एवोक्तरीत्या विद्वान् जानन्नग्निहोत्रं जुहोति। एतस्य सर्वैर्य-

ऋक्रतु रग्निष्टोमादिभिरेवेष्टं भवति सर्वे क्रतवः कृता भवन्तीत्यर्थः ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे पञ्चमप्रपाठके प्रथमखण्डः ।

---

अथ द्वितीयखण्डः ।

यदुक्त मग्निहोत्रमात्रेणैव सर्वक्रतुभिरिष्टंभवति तदेतदाख्यायिकयोपादयति—प्रजापतिर्वा । यतः पुरा प्रजापतिः खलु एतत् प्रसिद्धं सहस्रसंवत्सरः वत्सरशब्दो दिनपरः शतायुः पुरुष इति श्रुतेः । सहस्रसंवत्सरञ्जीवितुं मनुष्यस्य कस्याप्यभावात् । गन्धर्वादीनां सहस्रसंवत्सरजीवनेऽपि तेषामत्युपसंहारायासामर्थ्यान्नाधिकारः । न च यो मासः स संवत्सर इति दर्शनात् संवत्सरशब्दो मासपर इति शङ्कनीयं तत्राप्याधानादूर्द्धं सहमाजीवनासम्भवात् । नापि संवत्सरप्रतिमा वै द्वादश रात्रय इति प्रयोगाद् द्वादशरात्रपरता संवत्सरशब्दस्येति शङ्कनीयम् । प्रतिमा विशेषणत्वेनैवात्र संवत्सरशब्दस्य प्रयोगाच्चतुर्दशरात्रिषु प्रयोगादिति । अतः सहस्रदिवससाध्यं सत्र मसृजतेत्यर्थः । सृष्ट्वा च प्रजापतिः तेषा मुपसन्नानां देवाना मर्थे सहस्रसंवत्सरसाध्ये सत्रे गवामयन मवारुन्धत् न्यरीत्सीत् तच्च गवामयनं द्वादशाहे द्वादशाहसाध्येऽवारुन्धदित्यनुषङ्गः । एवमन्यदपि व्याख्येयम् ।

तस्मादग्निहोत्रे सर्वस्याप्यवरोधात्। अग्निहोत्रमात्रेण सर्वैर्यज्ञक्रतुभिरिष्टम्भवतीति सिद्धमित्यर्थः ॥ २ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे पञ्चमप्रपाठके द्वितीयखण्डः।

---

अथ तृतीयः खण्डः।

अथेदानीमौदुम्बरीविशेषो निरूप्यते—तत औदुम्बर्या-श्छ्रयणं विधातुं प्रशंसति—प्रजापतिर्देवेभ्यः। पुरा प्रजापतिर्देवेभ्यः स्वीयेभ्य असुषिरमूलां अच्छिन्नमूला मग्रन्थिं ग्रन्थिरहितां पृथुबुध्नां स्थूलमूलां एकजा मनेकशाखारहितामौदुम्बरी मुच्छ्रयति अतएतादृशौदुम्बर्य्या उच्छ्रयणं प्रशस्तमित्यर्थः। कियत्परिमाण मौदुम्बर्य्या इत्यत्राह—यजमानः। औदुम्बरी यजमानसम्मिता भवतीत्यर्थः। तथा च श्रुत्यन्तरम्। यजमानेन सम्मितौदुम्बरी भवतीति। यदि कुब्जादयो यजमानाः तथा कथ मित्याशङ्क्याह—अथ कुब्जा। कुब्जा वामना ह्रस्वाश्च भवेयुस्तर्हि ऊर्द्ध्वबाहवः स्युः। तैरूर्ध्वबाहुभि रौदुम्बरी समा यतोऽस्याः प्रच्छेदनं कुर्यात्। प्रश्नपूर्वकमौदुम्बर्य्या विशेषेण छेदने सङ्ख्याविशेषं दर्शयति—औदुम्बरी। कतिच्छदना भवतीत्यर्थः। अथोत्तरं—अग्निष्टोमसाध्यः। केष्वेषु यज्ञेषु औदुम्बरी नवच्छदना भवतीति वैश्यस्तोमाख्येषु यज्ञेष्वौदुम्बर्य्याः छदनान्येकादश कुर्यात्। एवमन्यदपि व्याख्येयम्। इदानीमौदुम्बर्युच्छ्रयणं वि-

धत्ते—य एवम् । यः पुमानेव मौदुम्बरीधर्म्मान्वेद विदित्वा च यथोक्ता मौदुम्बरीं यदोच्छ्रयति तदा अपचितिं पूजा माप्नोति । अथवोक्त मौदुम्बर्य्योच्छ्रयणस्याप चितिसाधन-नामाख्यायिकयोपपादयति—प्रजापतिः । पूर्वं प्रजापति-रपचितिं प्राप्नवानीत्यकामयत । किञ्च । उदुम्बरउर्कहे-तुत्वादूर्गत्वम् । अन्नञ्च साम यतः सामात्मकम् । तस्मात् सामगेभ्यः साम गायन्तीति सामगाः तेभ्यरपचितिं पूजां करवाणीति । अहं प्रजापतिः करवाणीति सम्बन्धः । अतो यः पुमानेवं यथोक्तलक्षण मौदुम्बरीं कृत्वोच्छ्रयति । सोऽप-चितिमे वाप्नोतीत्येवेति ॥ २ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्‌विंशब्राह्मणाख्ये द्वितीयब्राह्मणे पञ्चमाध्याये । तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

अथ सविशेषं यूपं निरूपयितु मुपक्रते । यूपं करोति स क्षीरं क्षीरवृक्षप्रकृतिकं मूले स्थूलं वालाग्रं सूक्ष्माग्रं मध्ये वानु रूपं यूपं करोति कुर्य्यादित्यर्थः । तत् प्रशं-सति—वज्रो वै । यूपो वज्र एव । तथा च तैत्तिरीयकम्—इन्द्रो वै वृत्राय वज्रं प्रहरन् स त्रेधा व्यभजत् स्फ्यतृतीयं यूपस्थानीयमिति । यस्मै यजमानार्थं वज्रेणैव भ्रातृव्यं यज्ञविघ्नकारिणं राक्षसं प्रतिहरति । यूपस्याष्टाश्रिकरणं विधत्ते—अष्टाश्रीः । तस्य अष्टसङ्ख्यका अश्री करोति कुर्या-

दिति दिक्षु चतस्रो विदिक्षु चतस्र इति। तत् प्रशंसति—दशदिशः। तथा सति ऊर्द्ध्वाधः सह दिग्भ्यां दश दिशः। परिगृहीतवान् भवति। अतश्च यूपे यूपविषये उभयतः द्वयोः। पार्श्वयोः पाङ्क्ते पञ्चसङ्ख्ये करोति कृतवान् भवति। पञ्चदश पंक्तिरिति सङ्ख्यासाम्यात् विकल्पं न धर्मान्तरं दर्शयति—पञ्चदश। पञ्चदशरत्निं वा यूपं कुर्यात्। यूपस्य काम्यानि प्रकृतद्रव्याणि दर्शयति—पालाशम्। पुष्टिकामस्य पालाशप्रकृतिं यूपं कुर्यात्। एवमन्यदपि योज्यम्। यज्ञियं यज्ञार्हं यत्किञ्च वैकङ्कतादिकं वृक्षजातमस्ति तत्प्रकृतिकं यूपं पशुकामस्य कुर्यात्। पालाशेष्वेव वर्जनीयान् प्रतिज्ञापुरःसरं दर्शयति—तत्र वर्जनीया भवन्ति। तत्र वर्जनीया गडुलो ग्रन्थियुक्तः। व्रणितः पक्ष्यादिकृतव्रणोपेतः व्यावृत्तः विरुद्धावृत्तः अप्रदक्षिणावृत्त इत्यर्थः। कुठिः मुण्डः कुटिलो वा। कुब्जः कुब्जोवक्राग्रः। शूलः तीक्ष्णाग्रः। दग्धो दावाग्निना शोषितः। शुष्को नीरसश्शुषिरः सच्छिद्रः। घुणदग्धः कृम्यादिभक्षितः इत्येके अप्रशस्ता। प्रतिज्ञापूर्वकमुपादेयान् दर्शयति—अथ प्रशस्ता। अथ वर्जनीयानन्तरं प्रशस्ता उच्यन्त इति शेषः। शुद्धावर्त्ताः प्रदक्षिणावर्त्ता अनुपूर्वसमा। अनुपूर्वेण समाश्चपन्नाः। शादयः प्रशस्ता उपादेया इत्यर्थः। यूपस्याग्निदेवताः सप्रतिज्ञं दर्शयति—यूपस्याग्नि। अथ यूपस्याग्निदेवतान्युच्यन्त इति शेषः। पूर्वाया मसौ अग्निदेवता अन्यत् समानम्। या विदिशः सन्ति ता विदिशस्ते प्रसिद्धा आदित्यादयो यथासङ्ख्यं तिष्ठन्ति। अपराजिता यस्यां

दिशि देवा असुरै: पराजिता नाभवन् सा अपराजिता अधरा दिगित्यर्थ:। सापि ऊर्द्ध्वायां दिशि साध्यास्ति-ष्ठन्ति। तद्देवत्येभ्य:। यथोक्तयूपं प्रशंसति—सर्वदेवत्यो वै अत: सर्वदेवत्यएव यूप: किञ्च यूप अनेकाश्रितत्वाद्बहु-रूप एव सन् वज्रोभूत्वा वज्रात्मकत्वं प्रतिपद्यते देवानुप-तिष्ठते। प्रकारान्तरेण यूप मेव प्रशंसति—ते देवा:। प्राप्तयूपास्ते देवा: प्रजापति मुपाधावन् उपेत्य चैतेन लब्धा-नुज्ञा: सन्तो यूपेन वज्रात्मकेन तेन राक्षसान् प्रति हरन्ति आरोधयन्ति आवृणन्ति एव। तथा आयोधयन्ति तै: सह युद्धं कुर्वन्ति। तत्तेन यूपस्य यूपत्वम्। तत्रैव धर्मान्तरं विधत्ते—मूल मरत्निं तस्य मूलं सत्वच मरत्निप्रमाणं नि-खनेन पित्रादिसम्बन्धेन यूपं पुन: स्तौति—तस्य यन्नैखा-न्यम्। तस्य यूपस्य यन्नैखान्यं यन्निखन सम्बन्धि स्थानं तत्पितृणा माश्रयं यदूर्द्ध्वं स्थानं तन्मनुष्याणाम्। रशनाया यूपे बद्धा पादभं मथ्या रज्वा अयत् स्थानं तदोषधिवनस्प-तीना मधिष्ठातृदेवतानामित्यर्थ:। रशनाया ऊर्द्ध्वं यत् स्थानं तद्विश्वेषां देवाना माश्रय इत्यर्थ:। धर्मान्तराणि दर्शयति—आप्लावयम्। यूप माप्लावयन्त्यभिषिञ्चेयु: तथा अलं कुर्वन्ति किञ्च अहतेन वसनेन वस्त्रेण आच्छादयन्ति आच्छादयेयु:। यथोक्त माप्लवनादिकं प्रशंसति—तं ग-न्धर्वा तदेतदा प्लवं गन्धर्वाणा मप्सरसां चार्थे कृतं भवती-त्यर्थ: तदीयं चषालं तदूर्द्ध्वप्रदेशं चेन्द्रादिसम्बन्धेन प्रशं-सति—इन्द्रस्य। तस्य यच्चषालं तदिन्द्रस्य सम्बन्धि चषा-लस्योर्द्ध्वं यदङ्गुलमात्रं कार्य्यं तत्साध्यानां देवानां स-

ख्विं। प्रशंसन् धर्मान्तरं विधत्ते—प्राचीम्। तं यूपं प्राचीं दिशं प्रति नमति सन्नमयेदित्यर्थः। एतद्वै एतदेव प्राचीसन्नमनं विष्णोर्देवस्य परमुत्कृष्टं स्थानम्। पुनर्यूपं तदीयशरीरादेर्ऋत्वाद्यात्मकत्वोपवर्णनेन प्रशंसति—तस्यर्त्तवः। तस्य यूपस्य शरीरं वसन्तादि ऋतवः शिरः संवत्सरः रूपाणि वेदाः य एवं वेद संवत्सरे एव प्रतितिष्ठति दीर्घायुर्भवतीत्यर्थः॥ ४॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीय ब्राह्मणे
पञ्चमप्रपाठके चतुर्थखण्डः।

---

अथ पञ्चमः खण्डः।

अथ सविशेषां सन्ध्यां प्रशंसापूर्वकमाख्यायिकया निरूपयितुं ब्रह्मवादिनां प्रश्नं तावदुपस्थापयति—ब्रह्मवादिनो वदन्ति। अर्थस्त्वतिरोहित एव। उत्तरं वक्तुमुपक्रमते—देवाश्च वा। पुरादेवाश्चासुराश्चास्पर्द्धन्त तत्र ते देवैः सह स्पर्द्धमाना असुरा दानवा आदित्यमभिलक्ष्य योद्धुमभ्यद्रवन् तदानीं स आदित्यस्तेभ्योऽसुरेभ्यो बिभेत् अतस्तस्यादित्यस्य हृदयं कूर्म्मरूपेण सङ्कुच्यातिष्ठत्। ततः किमित्यत्राह—स प्रजापतिः। स भीत आदित्यः प्रजापतिमुपाधावत् तस्य समीपं प्राप्तवानित्यस्यार्कस्य रक्षणाय प्रजापति रेतद्वक्ष्यमाणम्भेषज-प्रतीकारं सपश्यत्। ऋत मनृतवर्जनम्। सत्यं यथार्थभाषणम्। ब्रह्म ऋग्वेदादिकर्म।

ओङ्कारं प्रणवम्। त्रिपदां पादत्रयवतीं गायत्रीं चेति। किञ्च यथोक्तस्य भेषजस्य ब्राह्मणोमुखं प्रधानम् इत्यपश्यत् अतस्त्वेवं किं तत इत्यत्राह—तस्माद् ब्राह्मणोऽहोरात्रस्य संयोगे सन्ध्यामुपास्ते। यस्मादेवं तस्मात् ब्राह्मणशब्दः क्षत्रियवैश्ययोरप्युपलक्षणन्तयोरपि तत्राधिकारान्नु खल्वाब्राहोरात्रस्य संयोगे अहोरात्रयोः सन्धौ भव्यत्सन्ध्यामुपास्ते स ज्योतिषि नश्य दवस्थापन्ने न पूर्वज्योतिषा सहितेन कालेन आज्योतिषोदर्शनात् आगामिनो ज्योतिषो दर्शनपर्य्यन्तम् अन्तरालो यः कालः स अस्य सन्ध्योपासनस्य कालः सा सन्ध्या तदेव सन्ध्यायाः सन्ध्यात्वम् किञ्च साय मासीन उपविष्टः सन्ध्यामुपास्ते तया सन्ध्यया वीरस्थानं बलवत्स्थानं जयति प्राप्नोति। अथ पुनः सन्ध्याकाले अप उदकानि यत् प्रयुङ्क्ते ऊर्ध्वं विक्षिपति तत्र तावदूर्ध्वं विप्रुषो विन्दवः वज्रीभवन्ति वज्रीभूत्वा ता विप्रुषो असुरान् प्रति योद्धुमागतानपघ्नन्ति ततो देवा विजयिनो अभवन्। असुरास्तु पराभवन्ति पराभूत्वा ता अभवन् किञ्च य एव मुक्त प्रकारेण वेद अस्य वेदितुः भ्रातृव्य शत्रुरात्मना स्वेनैव पराभवति।

तथा सायञ्च प्रातश्च सन्ध्यां यदुपास्ते तथा द्विविधसन्ध्यागतस्य वीरस्थानं सततं सर्वदा अविच्छिन्नं भवति योऽप्येवं वेद तस्यापि यथोक्तं फलं भवतीत्यर्थः। तथा च तैत्तिरीयका आमनन्ति—तस्मादुत्तिष्ठन्तम् अक्षि तानि रक्षांस्यादित्यं योऽधमन्ति यावदस्तं गात्राणि द्रवा एतानि रक्षांसि गायेत् गायत्र्याभिमन्त्रितेनाम्भसा शाम्यन्ति तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्र्याभिम-

न्विता अथ ऊर्ध्वं विक्षिपन्ति । ता एता आपो वज्रीभूत्वा तानि रक्षांसि सन्देहा रुणद्धि प्रतीयन्तीत्यादि ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
पञ्चमप्रपाठके पञ्चमः खण्डः ।

---

अथ षष्ठखण्डः ।

अथ चन्द्रस्य क्षयवृद्धी निरूपयितुं प्रतिजानीते—अथैषा । अथेति वाक्योपक्रमे । एषा वक्ष्यमाणा चन्द्रमसः सम्बन्धिनी क्षयवृद्धिः यद्यपि द्विवचनेन भवति तथापि बाहुलकादेकवचनम् । तस्य विवरणं यस्मिन्नेव काले चन्द्रमाः क्षीयते कलाभिः यथा कलाभिराप्यायते च । तद्वयमनुव्याख्यास्यामोऽनुवर्णयाम इति । तत्र प्रथमं तस्य प्रकारं दर्शयति—पूर्वपक्षे । ये एव देवाः पूर्वपक्षे शुक्लपक्षे दीक्ष्यन्ते सोमपानाय दीक्षां कुर्वन्ति ते दीक्षिता देवा अपरपक्षे कृष्णपक्षे सोमं भक्षयन्ति । कथं तत्र सोमपानविषये इमानि वक्ष्यमाणानि पात्राणि उपधीयन्ते तेषामेव प्रदर्शनम्—पृथिवीलोकं पात्रम् अन्तरिक्षलोकं पात्रम् द्यौः द्युलोकमेकं पात्रमिति । तत्रादित्याः आदित्याख्या देवा दिव्येन पात्रेण प्रथमं त्रेधा विभागे आद्यभागात्मकं पञ्चकलं पञ्चकला यस्य तं सोमं पञ्चमीम् अत्यन्त-

संयोगे द्वितीया। प्रतिपदारभ्य पञ्चमीपर्य्यन्तं भक्षयन्ति प्रतिदिवसमेकैकां कलां पिबन्तीत्यर्थः। ततस्ते दीक्षिता रुद्राख्या देवा अन्तरिक्षे अन्तरीक्षलोकात्मकत्वेन पात्रेण द्वितीयं पञ्चकलं दशमीं षष्ठीमारभ्य दशमीपर्य्यन्तं भक्षयन्ति ततस्ते दीक्षिता वसवो वस्वाख्या देवाः पृथिव्याः पात्रेण तृतीयं तृतीयभागात्मकं पञ्चकलं पञ्चदशीपर्य्यन्तं पूर्ववद्भक्षयन्ति। ततश्चन्द्रमसः षोड़श्येका कलावशिष्यते अतः। यतश्चन्द्रमाः षोड़शकलानन्तरं सोऽवशिष्टैककला सोमः ओषध्यादीन् प्रविशति तथाच सति इन्द्रज्येष्ठाः इन्द्रप्रमुखाः सोमपाश्चाः सर्वे देवास्तं सोम मिलक्ष्यतो तादृशं सोमवतीं रात्रिं वसन्ते तत्र दृष्टान्तः यथेत्यादि। यथा वृद्धं जरया प्रलयं नाश मुपगच्छमानम् उपगच्छन्तं व्याधिगतं रोगिणं पितरं पितामहं प्रपितामहं वा अभिलक्ष्य मरिष्यति नवति सन्दिहानाः पुत्रादयस्तां रात्रिं वसन्ति तद्वदित्यर्थः। तत्तेन देवानां सहवासनिमित्तेन अमावास्याः अमाशब्दः सहार्थे अमावस्या त्वम् अमा सह संवसन्त्यस्यामिति व्युत्पत्तेरित्यर्थः। यस्मादेवं तस्मादेव खलु अमावस्यायां न किञ्चिदप्यध्येतव्यं भवति अध्येतव्यस्य वर्णात्मकस्य वेदादे रग्नीषोमात्मकत्वात् तत्र सोमस्यादर्शनादित्यर्थः। अथ तस्य वृद्धिप्रकारं प्रतिज्ञापूर्वकं दर्शयति—

अथ सम्भरणम्। अथ क्षयदर्शनान्तरं सम्भरणं चन्द्रमसः कलाभिः पोषणम् उच्यत इति शेषः। कथं यत्र चान्द्रः कलापूर्व मनुप्रविष्टा ताभ्य ओषधिभ्यो वनस्पतिभ्यः अपुष्पा फलवन्तो वनस्पतयस्तेभ्यश्च गोभ्यश्च पशुभ्यश्चादित्याश्च

ब्रह्मन्नाम्न्यो वेद: तस्माद् ब्राह्मणाश्च स्वतोपितोषितं चन्द्रमसन्नयन्ते सम्यङ्नयन्ति। यस्मादेवं तस्मात्सान्नाय्यस्य सन्नयनसम्बन्धिनश्चन्द्रमस: सान्नाय्यत्वं यथा एभ्य ओषधीभ्य: सन्नीय स्वात्मनि सन्नयन दधिपयसो: सान्नाय्यत्वम्। तथा तैत्तिरीया आमनन्ति—एतस्मै सन्नयेतेति तत्पशुभ्य ओषधीभ्योऽध्यात्मन् समनयन् प्रत्यदुत्पद्य समनयत् सान्नाय्यस्य सान्नाय्यत्वमिति एव मन्त्रापोत्यर्थ:। अथेदानीं अनुमत्यादिपतित्वेन चन्द्रमसं प्रशंसति—चन्द्रमा वै। पतिरनुमत्यादीनां रेतस आधातृत्वात् अनुमत्यादीनां स्वरूपप्रदर्शनं—या पूर्वा। या पूर्वा चतुर्दशीविद्धपौर्णमासी सानुमतिरित्युच्यते—योत्तरा। योत्तरा सम्पूर्णचन्द्रोपेता सा राका या पूर्वा। या पूर्वादृष्टचन्द्रामावास्या सा सिनीवालीत्यभिधीयते। योत्तरा नष्टेन्दुकलामावास्या सा कुहूरित्युच्यते एताश्चन्द्रमसो जाया इत्यर्थ:। अतय: पुमान् बुद्धिमनुगश्चन्द्रं तं पश्यति अन्यं न पश्यति अस्य द्रष्टुस्तत् तादृशमेव मिथुनं भवति। अनुमत्यादि पर्वचतुष्टयं युगचतुष्टयसम्बन्धित्वेन प्रशंसति—पुष्ये वा पुष्यत्यस्मिन्धर्मानिति पुष्ये कलियुगे अनुमतिश्रेष्ठेति ज्ञेया तथा द्वापरे सिनीवाली श्रेष्ठा भवतीति। खार्वायाम्। खर्वौ समौ धर्माधर्मौ यस्य त्रेतायां खार्वां तस्य राका श्रेष्ठा तथा भवेत्। कुहू: कृतपर्व कृतयुगसम्बन्धि पर्व भवेत् इति। अनुमत्यादीनां लक्षणानि दर्शयति—न्यूने वा। न्यूने चन्द्रे कलारहिते सति पौर्णमासी ममनतिं विद्यात् यस्मिन्देशे चन्द्रमा श्चा दृश्येत सा ऽमावास्या सिनीवालीति ज्ञेया यदि चन्द्रमा

सम्पूर्णो दृश्यते सा पौर्णमासी राका। यत्र तु चन्द्रो न दृश्येत सामावास्या कुहूरिति ज्ञेया ॥ ६ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
पञ्चमप्रपाठके षष्ठखण्डः ।

---

अथ सप्तमखण्डः ।

अथ स्वाहाकाराख्यां देवतां प्रश्नपूर्वकं निरूपयितुं प्रजापतिं प्रति ब्रह्मवादिनां प्रश्नं तावदुपस्थापयति—स्वाहा वै निगदसिद्धमेतत्। उत्तरमाह—स्वाहा वै सत्यसम्भूता। स्वाहा सत्येनैव सम्भूता नान्येन। ब्रह्मण एव दुहिता ब्रह्मणा प्रकर्षेण कृता। लातव्येन ऋषिणा समानगोत्रा। तस्या मन्त्र-राणि सकार-वकार-हकारात्मकानि त्रीणि पदमेकं एता-वन्त्येवेति मन्तव्यम् अस्यै अस्या वर्णरूपाणि शुक्लः पद्मः पद्म-शब्देन पद्मवर्णं उपलक्ष्यते सुवर्णवर्णश्चेति त्रयः। अस्याश्च-त्वार ऋगादयो वेदा उच्छ्वासाः स एव तस्याः शरीरं यानि निरुक्तादीनि षड्वेदाङ्गानि तान्येव तस्या अङ्गानि ओषधि-वनस्पतय एवास्या लोमानि। तथा द्वे शिरसी तयोरेव प्रदर्शनं अमावास्यैकं शिरः पौर्णमासी द्वितीयं शिरः तत्रैव च यागकरणाच्चन्द्रादित्यौ चन्द्रादित्यावेवास्याश्चक्षुषी इत्यर्थः। आज्यभागाख्ये कर्म्मणी एवास्याः हुतं हवनस्थानं मुख-मित्यर्थः। यागे या दक्षिणा सैव प्रावृता वरणं तस्याः बृह-द्रथन्तरे एवं सामनी एव बाहू इति शेषः। ऋग्यजुः

सामवेदाख्यः उच्छ्वासः ऋगादय स्त्रयो वेदा गतिः पादा इत्यर्थः । एवंविधा या स्वाहा सा एव स्वधा नान्या तथा वषट्कारः सैषा स्वाहा देवेषु देवयज्ञेषु वषट्कारभूता सती प्रयुज्यते सैव तथाभूता पितृयज्ञेषु प्रयुज्यते इत्या-शयनिरूपणम् । शकटीमुखी पृथिवी मधिष्ठायान्तरिक्षेण मार्गेण विपर्येति स्वाहा सर्वं स्वर्गादिफलं व्याप्नोतीति । तस्याः स्वाहाया अग्निर्दैवतम् अग्निरेव देवतारूपं ब्राह्मणः तत्प्राधान्यात् । प्रजापतये इत्यत्तोऽन्यः कश्चित् सर्वाणि भुवनानि परिभवितुं न शक्नोति । अतस्ते तुभ्यं वयं यत्-कामा यत् फलं कामयमाना जुहुमः तत् फलं नो अस्मा-कम् अस्तु किञ्च वयं रयीणां धनानां पतयः स्याम भवेम स्वाहेत्यनेन स्वाहायाः प्रजापतिपरिग्रहो दर्शितः । यथोक्त-रूपां स्वाहां प्रशंसति—तस्यानु तृप्तिम् । तस्याः स्वाहा-कारपरिग्रहेण तृप्तस्य प्रजापतेः तृप्ति मनु यजमानः प्रजया पुत्रपौत्रादिकया पशुभिर्गवादिभि रन्नाद्येन तेजसा ब्रह्मवर्चसेन तृप्यति इति शब्दोऽध्याय-परिसमाप्ति-द्योत-नार्थः ॥ ७ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
पञ्चमप्रपाठके सप्तमखण्डः ।

## इति पञ्चमप्रपाठकः ।

---

# अथ षष्ठः प्रपाठकः ।

## अथ प्रथमः खण्डः ।

षष्ठाध्याये अद्भुतशान्तिं निरूप्यते। तत्र प्रथमं सविशेषां शान्तिं दर्शयितुं प्रतिजानीते—अथातोऽद्भुतानाम्। इष्टप्राप्तिसाधनकर्म्मनिरूपणान्तरम् अतोऽनिष्टपरिहारसाधनकर्म्मनिरूपणस्य प्रस्तुतत्वादद्भुतानां दैविकाना मनिष्टप्राप्तिसूचकानां कर्म्मणां तत्सूचितदोषनिर्हरणसाधनात्मकं व्याख्यास्यामः विशेषेणानुवर्णयामः। प्रतिज्ञातां शान्तिं विधत्ते—पालाशानाम्। पलाशसमिद्भिरष्टसहस्र मष्टोत्तरसहस्रं जुहुयात्। तत्र देवताप्रकाशकान्मन्त्रान् दर्शयति—ऐन्द्रयाम्य। ऐन्द्रः इन्द्रदेवत्यः सर्व्वेऽपि देवास्तद्धितान्ता ऐन्द्रादयो वैष्णव्यन्ता वष्टावृचः ताभिर्जुहुयादित्यर्थः। ता एव ऋचः प्रतीके दर्शयति—इन्द्रायेन्दोमरुत्वते। एता ऋचः छन्दो ग्रन्थव्याख्याने स्पष्टमस्माभिर्व्याख्याता। इत्यत्र न व्याख्या क्रियन्ते। यथोक्तं मन्त्रैर्होमं दर्शयित्वा इदानीं तदङ्गत्वेन तेषा मेव इदं स्वस्तिवाचनं दर्शयति—एतानि साम। एतानि यथोक्तानि मन्त्रवर्णानि साम प्रभृति सामगानपुरःसरम् अष्टशतमष्टोत्तरशतं प्रत्येकं जपित्वा स्वस्तिवाचनं कृत्वा पुण्याहवाचनं कुर्य्यादित्यर्थः। तथाच सति एषां यजमानानां स्वस्ति अनिष्टपरिहारद्वारेण मङ्गलं भवत्येव। स्वस्तिवाचनमन्त्रान् प्रतीकैर्दर्शयत्येव। स्वस्तिदाविशस्पतिः एते मन्त्रा उत्तराग्रन्थे स्पष्ट मस्माभिर्व्याख्याता। स्वस्तिवाचनमन्त्राणां

होमसम्भारोपस्थाने योगं दर्शयति—एतैः सम्भाराणा मुपस्थानम्। एतैः स्वस्तिदाविशस्पतीत्याद्यैर्मन्त्रैः सम्भाराणा मुपस्थानं कृत्वा शेषं कर्मसमापयेदित्यर्थः। तथा सति अस्य यजमानस्य स्वस्ति मङ्गलं भवत्येवद्विरुक्तिरादरार्था शान्तिप्रशंसार्था। लिङ्गादन्यत्र विनियुक्ताना मप्येषां मन्त्राणां श्रुत्या सम्भारोपस्थाने विनियोगः यथा ऐन्द्रा गार्हपत्य मुपतिष्ठत इति श्रुत्या ऐन्द्रायाः ऋचोः गार्हपत्योपस्थाने विनियोगः॥ १॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
षष्ठप्रपाठके प्रथमखण्डः।

---

अथ द्वितीयखण्डः।

अतः सप्रशंसं शत्रुकृतोपद्रवे प्राप्ते शत्रुविजयार्थं होमविशेष माख्यायिकापुरःसरं दर्शयितुमुपक्रमते—देवाश्च वा असुराश्च। एषु लोकेषु पृथिव्यादिलोकविषये देवाश्चासुराश्च परस्पर मस्पर्द्धन्त असुरेभ्यः स्पर्द्धमाना देवाः प्रजापतिमुपाधावन् ततः प्रजापतिस्तेभ्य उपसन्नेभ्यो देवेभ्यो एतां वक्ष्यमाणां देवीं देवसम्बन्धिनीं शत्रुकृतोपद्रवनिर्हरणसाधनभूतां प्रायच्छदिति। ततः किमित्यत्राह—ते ततः शान्तीका अतोऽनन्तरमेव देवाः शान्तीकाः प्रहरणार्थे शत्यश्योरीकगितिविहित ईकक्प्रत्ययो बाहुलकाच्छान्तेरपि भवति। तेन प्रजापतिदर्शितशान्तिहोमाः हुताः सन्तः असुरानभ्य-

जयन् ततो देवाः शत्रुकृतोपद्रवरहिता अभवन् असुरास्तु पराभूता आसन् । किञ्च य एव मुक्तप्रकारेण वेद अस्य भ्रातृव्यः शत्रुः आत्मना स्वेनैव पराभवति यदर्थमाख्यायिका तं होमं सेतिकर्त्तव्यताकं दर्शयति—अथ पूर्वाह्ण एव । अथशब्दो वाक्योपक्रमे पूर्वाह्ण एव नैत्यमग्निहोत्रं हुत्वा वीरणान् तत्संज्ञान् तृणविशेषान् फलवतीं प्रियङ्गुकामपामार्गं प्रसिद्धमित्येतानि दर्भादीनि सम्भारद्रव्याणि स्वयमाहरेत् यजमानः पुत्रादिना वाहारये दाहृत्य च तानि निष्णातः प्रयतो वातः शुचिः सन् शुद्धवासा नित्यतन्त्रेण स्थण्डिलमुपलिप्य गोमयेन तत् स्थण्डिलमद्भिः प्रोक्ष्य स्वशाखोक्तविधिमनतिक्रम्यदर्भैः स्थण्डिलमुल्लिख्य पुनरद्भिरभ्युक्ष्य तत्राग्नि मुपसमाधायेन्द्रायेन्द्रो मरुत्वत इत्याद्यैरिन्द्रादिदेवत्यैरष्टभिः पूर्वोक्तैर्मन्त्रैर्वक्ष्यमाणैर्द्रव्यैरिन्द्रादीनुद्दिश्य प्रत्येकमष्टोत्तरशतं जुहुयादिति शेषः । द्रव्याणां प्रदर्शनं—कृसरं मुद्गादिमिश्रैः स्थण्डिलैरिति पक्कमन्नम् । रक्तपायसं रक्तशालितण्डुलैः पक्कं पायसम् । घृतपायसं घृतमिश्रेण क्षीरेणैव घृतपायसम् । अन्यत् प्रसिद्धम् । एते सर्वे ओदनादयो द्रव्यविशेषाः पृथक् कृतोत्तराश्रवः । एतेषा मभावे घृतोत्तराश्रव एव ग्राह्या इत्यर्थः । अथवा सर्वेषां तेषामलाभे पायसः परमान्नम ग्राह्यमित्यर्थः ॥ २ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे षष्ठप्रपाठके द्वितीयखण्डः ।

अथ तृतीयखण्डः ।

इदानीमैन्द्राद्भुतविशेषं दर्शयितुं तदङ्गत्वेन किञ्चिन्नियमान् दर्शयति—स प्राचीम् । वक्ष्यमाणाद्भुतविशेषनिमित्तवान् प्राचीं दिश मन्वीक्ष्य वर्त्तते होमकरणार्थं प्रवर्त्तेत । वक्ष्यमाणानामद्भुतविशेषाणां प्राच्यां दिशीन्द्रसम्बन्धित्वविशेषा दिदानीं निमित्तविशेषान् दर्शयति—अथ पुनर्यस्य पुरुषस्य सम्बन्धिनां मणिहारादिसम्बद्धः तदादीनां दरणं भेदनं आयासः चित्तपीड़ा अथवा राजकुलेन सह विवादो भवेत् । तथा यानमान्दोलिका तदादीनां भञ्जनेषु तेषु भग्नेष्वित्यर्थः । अथवा गजवाजिप्रभृतयो ह्यतिप्रमीयन्ते एवमादीन्यासमादितेन्द्रञ्जानाति । तान्येतानीन्द्रदेवत्यानि प्रायश्चित्तनिमित्तानि भवन्तीत्यर्थः । एवं निमित्तानि दर्शयित्वा इदानीं तद्दोषनिबर्हणं सेतिकर्त्तव्यताकं होमं दर्शयति—इन्द्रायेन्द्रोमरुत्वत । स्थालीपाकं स्थालीपाकविधानमनतिक्रम्य त्वकं श्रपयित्वा इन्द्रायेन्द्रोमरुत्वत इत्यनया ऋचा हुत्वा पुनरिन्द्राय स्वाहेत्यादिभिः पञ्चभिर्मन्त्रैः पञ्चभि राज्याहुतिर्जुहोति जुहुयात् । ततस्तत्र्य नूनातिरिक्तप्रायश्चित्तार्थं भूः स्वाहेत्यादिभिः व्याहृतिभिः हुत्वा अथ पश्चादिन्द्रायेन्द विन्यस्या मृचि अष्टोत्तरशतं साम गायेत् अनन्तरं स्वस्तिवाचनादिकं पूर्ववत् कुर्य्यात् ॥ ३ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे षष्ठप्रपाठके तृतीयखण्डः ।

अथ चतुर्थखण्डः ।

याम्यनिमित्तहोमविशेषं दर्शयितुं तदर्थमपि किञ्चिन्नियमं दर्शयति—सदक्षिणां दिश । स वक्ष्यमाणाद्भुतविशेषनिमित्तवान् होमाधिकारी दक्षिणान्दिशमन्वीक्ष्य वर्त्तते होमार्थं निमित्तविशेषाणां दक्षिणा दिशोऽपि याम्यत्वाविशेषात् । इदानीं निमित्तविशेषान् दर्शयति—अथ यदास्य । अथ पुनर्यदा अस्य पुरुषस्य सम्बन्धिषु प्रजया पुत्रादिकया सहितेषु पशुषु गवादिषु स्वशरीरे वा अरिष्टानि प्रादुर्भवन्ति । अथवा अनेकविधा ज्वरादयो व्याधयः प्रादुर्भवन्ति । तथातिस्वप्नदर्शनम् । अस्वप्न मनिद्रा । अतिभोजनं भस्मकरोगवशेन बहुतराव्यभक्षारः । अभोजन मरुच्यादिना । आलस्यं भुवालसनावरणम् । अजीर्णं क्षुदभावेन भुक्तस्यान्नरस्यापचनम् । अतिनिद्रा एवमादीनि नेत्रादिदोषः । तान्येतानि सर्वाणि यमदेवत्यानि अद्भुतानि प्रायश्चित्तनिमित्तानि भवन्ति । एवं निमित्तविशेषान् दर्शयित्वा इदानीं तद्धेतुदोषनिवर्त्तणसाधनं होमं सेतिकर्त्तव्यताकं दर्शयति—नाकेसुपर्णमिति स्थालीपाकं हुत्वा पञ्चभि राज्याहुतिभि रभिजुहोति यमाय स्वाहा प्रेताधिपतये स्वाहा दण्डपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहा इति जुहुयात् । ततः तत्र न्यूनातिरेकप्रायश्चित्तार्थं व्याहृतिभिर्हुत्वा अथ पश्चान्नाकेसुपर्णमित्यस्यामृचि साम गायेत् पूर्ववत् स्वस्तिवाचनं कुर्यादिति॥४॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणेषष्ठप्रपाठके चतुर्थखण्डः ।

## अथ पञ्चमखण्डः ।

अथ वारुणनिमित्तविशेषं दर्शयितुं यदर्थनियमं दर्शयति—स प्रतीचीं दिशम् । स वक्ष्यमाणनिमित्तवान्नधिकारो प्रतीचीं पश्चिमां दिशं अन्वीक्ष्यावर्तते होमकरणार्थं वर्तेत निमित्तविशेषाणां प्रतीच्या दिशश्च वरुणसम्बन्धित्वाविशेषादिदानीं निमित्तविशेषान् दर्शयति—अथ यदास्य अथ यदास्य पुरुषस्य क्षेत्रमन्दसंस्थितेषु क्षेत्रस्थितेषु च धान्येष्वीतयो वक्ष्यमाणाः प्रादुर्भवन्ति । ईतीनामेव प्रदर्शनमीतयोऽनेकविधा अनेकप्रकाराः खलु आखुर्मूषकः पतङ्गः पक्षिविशेषः पिपीलिकाः प्रसिद्धाः मध्वका मधुमक्षिकाविशेषाः भौमकाः भूमौ भवा क्षुद्रजन्तवः शुकाः कीराः सरभकाः प्रसिद्धाः सौक्ष्मका सूक्ष्मसम्बन्धिन इत्येवमादीनि अतिवृष्ट्यादीनि च सर्वाण्येवान्यद्भुतानि वरुणदैवत्यानि प्रायश्चित्तनिमित्तानि भवन्ति तद्धेतुरूपनिबर्हणसाधनं होमं सेतिकर्तव्यताकं दर्शयति—घृतवतीति । घृतवतीभुवनानामभिश्रिया एषा ऋचः । अन्यत् पूर्ववद्व्याख्येयम् इति ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे षष्ठप्रपाठके पञ्चमखण्डः ।

अथ षष्ठखण्डः ।

वैश्रवणनिमित्तकं होमं दर्शयितुं तदर्थमपि नियमं दर्शयति—स उदीचीं दिशम् । स वक्ष्यमाणनिमित्तवान् अधिकारी उदीचीं दिशमन्वीचा वर्तते । होमार्थं निमित्तविशेषणं उदीच्यादिशश्च कुवेरसम्बन्धित्वाविशेषादिदानीं निमित्तविशेषान् दर्शयति—अथ यदास्य । अथ यस्य पुरुषस्य यदा कनकादिभ्यो वियोगो भवति अथवा आरम्भा वा विपद्यन्ते निष्फला भवन्ति । अथवा अन्यानि क्रूराणि पिशाचादिदर्शनादीनि । अपि वा मित्राणि सुहृदो वियोज्यन्ते विद्विषन्ति अथवा अरिष्टानि दुःखसूचकानि वयांसि काकादीनि स्वगृह मध्यासन्ते गृहे वल्मीकभौमानि भूमौ भवन्ति एतानि जायन्ते प्रादुर्भवन्ति । अथवा छत्राकं छिलिधं गृहोपरि दृश्यन्ते । अथवा सरघा अभिनिलीयन्ते स्वगृहे एवमादीन्यन्यान्यपि सर्वाण्यद्भुतानि वैश्रवणदेवत्यानि कौबेराणि प्रायश्चित्तनिमित्तानि भवन्ति । तद्धेतुदोषनिवर्हणसाधनं होमं सेतिकर्तव्यताकं दर्शयति—अभित्यं देवमिति । अभित्यं देवं सवितारं मोण्योरित्येषा ऋक् । अन्यत् पूर्ववद्व्याख्येयम् इति ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे षष्ठप्रपाठके षष्ठखण्डः ।

## अथ सप्तमखण्डः।

अथाग्निदेवताकनिमित्तविशेषे होमविशेषं दर्शयितुं तदङ्गत्वेनादौ पृथिवीनिरीक्षणपूर्वकमावर्तनं दर्शयति—सा पृथिवी। होमार्थं वक्ष्यमाणनिमित्तानां पृथिव्याश्रयत्वाविशेषादिदानीं निमित्तविशेषान् दर्शयति—अथ यदास्य नैवम्। रुदति रोदति। धूमायति अग्निं विनैव धूमः प्रचुरो भवति। अकस्मात् वृष्टिं विनैव सलिलमुद्गिरति तथा सलिले प्रक्षिप्तः पाषाणः प्लवत् प्लवमान एव तिष्ठति न तु मज्जति निमग्नं मृतशरीरमुदके प्रक्षिप्तं नो प्लवति किन्तु निमज्जति किञ्चाकाले पुष्पञ्च फलञ्च फलपुष्पमभिनिवर्ततीति वृक्षमभितो जायते। तथा सति अश्वतर्या गर्भो जायते। अश्वतर्याः प्रजापतिना अरेतस्कत्वात् गर्भाभावः 'तस्मादश्वतरो न जायते अरेता हि' इति श्रुतिप्रसिद्धिस्तथा यदा यस्मिन् देशे हस्तिनी करिणी मज्जति निर्निमित्तं उदके निमज्जति तथा यत्र यस्मिन् देशे भूकम्पो जायते तत्र तदा तद्देशाधिपती राजा विनश्यति किञ्च यदा गोर्गृहमारोहेद् ग्रामं महिषी आरोहेदित्यनुषङ्गः आरण्यकमनुष्यगृहारोहणीयासम्भवाद् ग्राममहिषीति विशेषणमित्येवमादीनि ग्रामसूकरगृहारोहणादीनि तान्येतानि सर्वाण्यद्भुतानि अग्निदेवत्यानि प्रायश्चित्तानि भवन्ति तद्वेतुदुरितापूर्वनिबर्हणसाधनं होमं सेतिकर्तव्यताकं दर्शयति—अग्निन्दूतमिति। अग्निन्दूतं वृणीमह इत्यनया ऋचा स्थालीपाकविधानेन चरुं श्रपयित्वा तं हुत्वा पुनरग्नये स्वाहेत्यादिभिः पञ्चभिर्मन्त्रैः

पञ्चभि राज्याहुतीरभिजुहोति जुहुयात्। पुनः न्यूनाति-रेकप्रायश्चित्तार्थं व्याहृतिहोमान् हुत्वा यथोक्तायामृचि साम गायेत् ॥ ७ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे षष्ठप्रपाठके सप्तमखण्डः।

---

अथ अष्टमखण्डः।

वायुदेवताकनिमित्तविशेषं होमविशेषं दर्शयितुं तदङ्गत्वेनादावन्तरिक्षनिरीक्षणपूर्वकमावर्तनं दर्शयति—सोऽन्तरिक्षम्। वक्ष्यमाणनिमित्तानामन्तरिक्षस्य च वायु-सम्बन्धित्वाविशेषादिदानीं निमित्तविशेषान् दर्शयति—अथ यदास्य। अथ पुनर्यस्य देशे यदा अधिकभावाभ्या-त्वाधिका अतिशयिता वाता वायन्ते वर्तन्ते। वय गता-विति धातुः स्वरितेत्। अभ्रेषु परुषाणि दृश्यन्ते। पर्व-तादिषु निर्निमित्तत्वं प्राकृतविरुद्धरूपाणि दृश्यन्ते तथा अस्य गृहाणि खरो गर्दभः करभः कलेलकः मन्यो मृग-विशेषः कङ्कपोतादयः प्रसिद्धाः गोमायुः क्रोष्टा एतैः प्रविष्टानि दृश्यन्ते उपर्यन्तरिक्षे च पांसवः धूलयः। मांस-पेशी मांसखण्डः। अस्थिरुधिरे प्रसिद्धे। एतेषां वर्षाणि प्रवर्त्तन्ते तथा काकमिथुनानि दृश्यन्ते तथा रात्रौ मणि-धनुं इन्द्रधनुं पश्येत किञ्च प्रगकाष प्रयाश्च ग्रामं यदा

प्रविशन्ति । वृक्षेभ्यश्च रुधिराणि स्रवन्ति । आकाशे राजकुलं पश्यति गन्धर्वनगरादिकं स्थितं दृश्यत इत्यर्थः । इत्येवमादीनि तान्येतानि सर्वाणि वायुदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति । तद्वेतुदुरितापूर्वनिबर्हणसाधनं होमं विध्यन्तसहितं दर्शयति—वात आवात भेषजं इत्येतया ऋचा । अन्यत् पूर्ववद्व्याख्येयम् ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
षष्ठप्रपाठके अष्टमखण्डः ।

---

अथ नवमखण्डः ।

सोमनिमित्तकविशेषं होमविशेषे दर्शयितुं तदङ्गत्वेन युनिरीक्षणपूर्वकमावर्त्तनं दर्शयति—स दिवम् । स दिवमन्वीक्ष्यावर्त्तते । दिवो वक्ष्यमाणनिमित्तानां च सोमदेवत्वादिदानीं निमित्तविशेषान् दर्शयति—अथ यदास्य । अथ पुनर्यस्य गोचरे यदा तारावर्षाणि नक्षत्रवृष्टयः पतन्ति जायन्त इत्यर्थः । उल्काश्च पतन्ति । दिशो धूमायन्ति निर्निमित्तं धूमयुक्ता इव प्रदृश्यन्ते धूमकेतवः उपतिष्ठन्ति तथा गवां शृङ्गेषु विषाणेषु धूमा जायन्ते गवां त्वित्यर्थः । तथा ता एवं दह्यन्त्यो ज्वालारूपा इव दृश्यन्त इत्यर्थः किञ्च अन्तरिक्षे केतवो तेषु रुधिरं स्रवति न पयः । किञ्च अत्यर्थं अतिबहुलं हिमं पततीत्येवमादीनि सर्वाण्यद्भुतानि सोमदेवत्यानि निमित्तानि भवन्ति । इदानीं तद्वेतुदुरिता-

पूर्वपरिहारार्थं होमं दर्शयति—सोमं राजानं वरुणमित्येषा ऋक्। अन्यत् पूर्ववद्व्याख्येयम् ॥ ८ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे
षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
षष्ठप्रपाठके नवमखण्डः ।

---

अथ दशमखण्डः ।

वेणवाद्भुतविशेषे होमविशेषं दर्शयितुं तदङ्गत्वेन परस्या दिवो निरीक्षणपूर्वकमावर्त्तनं दर्शयति—स परं दिवमन्वावर्त्तत इति । स वक्ष्यमाणाद्भुतविशेषनिमित्तकमधिकारी परमुत्कृष्टां वैष्णवीं दिशमन्वीक्ष्य वर्त्तेत । होमार्थं निमित्तानां दिशश्च वैष्णवत्वात् । इदानीं तावन्निमित्तविशेषान् दर्शयति—अथ यदास्यायुक्तानि । अथ पुनर्यस्य पुरुषस्य यदा यानानि अयुक्तानि अयोग्यानि खरमहिषादीनि प्रवर्तन्ते स्वप्नावस्थायां तथा अगोचरे ता एव देवता उच्यन्ते युज्यन्ते तेष्वपि देवतायतनानि कम्पन्ते तन्निमित्तं चलन्ति तथा देवतायाश्च प्रतिमा हसन्ति रुदन्ति गायन्ति नृत्यन्ति च तथा स्फुटन्ति एकदेशतः स्फुटनं प्राप्नुवन्ति न स्विद्यन्ति विदीर्य्यन्ते च उन्मीलन्ति नेत्रोन्मीलनं कुर्वन्ति च तथा नद्यश्च प्रतिप्रयान्ति वैपरीत्येन प्रवहन्ति किञ्च आदित्ये तपति सति कबन्धं शिरोरहितं शरीरं स्वच्छायया दृश्येते । तथा विजले जलरहिते अवृष्टिकाले परिविष्यते चन्द्रादित्ययोः परिवेषो दृश्यते । तथा

केतवो ध्वजाः तदादीनि निःकारणं प्रज्वलन्ति। अश्वानाञ्च वालधीषु अङ्गाराः चरन्ति। पतन्ति तानि दण्डादिभिः अताड़ितानि चर्म्माणि चर्म्मयुक्तानि भेर्य्यादीनि कनिक्रन्दन्ते कुर्वन्तीति। एवमादीनि तान्येतानि सर्वाणि विष्णुदेवत्यान्यद्भुतानि विष्णुदेवत्यानि प्रायश्चित्तनिमित्तानि भवन्तीति। इदानीं तद्धेतुदुरितापूर्वनिवर्हणसाधनं होमं सविध्यन्तं दर्शयति—इदं विष्णुः। स्थालीपाकम्। स्थालीपाकविधानमनतिक्रम्य चरुं श्रपयित्वा इदं विष्णुर्विचक्रम इत्यनया ऋचा हुत्वा पुनर्विष्णवे स्वाहेत्यादिभिः पञ्चभिर्मन्त्रैः पञ्चभि राज्याहुतिभिरभिजुहोति जुहुयात्। ततस्तन्न्यूनातिरिक्तप्रायश्चित्तार्थं व्याहृतिभिर्हुत्वा अथ वाचोदस्यां वैष्णव्यामृचि सामाष्टोत्तरशतं गायेत्। शुद्धे भूतले होमं कुर्य्यादिति दर्शयितुं भू-शुद्धिहेतुं दर्शयति—खननाद्दहनात्। खननात् कुद्दालादिभिः। दहनादग्निना। अभिमर्शनान्मन्त्रपूर्वकं हस्तेन गोभिराक्रमणेन च इत्यतः खननादिभिश्चतुर्भिर्भूमिः शुध्यन्ते। तथा पञ्चमाद्गोमये नोपलेपनाद्भूमिः शुद्ध्यत इत्यनुषङ्गः। सामगानानन्तरं कुर्य्यादित्यत्राह—सम्भारान्। ततः सम्भारान् प्रागुक्तान् दर्भादीन् होमसम्भारान् प्रदक्षिणं यथा भवति तथा तोयसमीपदेशमानीय ब्राह्मणानुपवेश्य स्वस्तिवाच्य पुण्याहवाचनं कृत्वा कर्म्मसमापयेदिति शेषः। सम्भाराणां मध्ये कस्य उपहवनी तस्याभ्युक्षणाच्छुद्धिहेतुत्वेन विधत्ते—एतैः सम्भारैः एतैर्यथोक्तैर्यदुपसृष्टमुपहतं तद्द्रव्य मभ्युक्षेत् स्वस्तिदाविशस्पतिरित्याद्यैः स्वस्तिवाचनमन्त्रैरथोभ्युक्षणा-

त्तदुपहतदोषः शाम्यत्येव । नैमित्तिकहोमाङ्गत्वेन ब्राह्मणभोजनं दक्षिणां दर्शयति—ब्राह्मणभोजनम् । होमानन्तरं ब्राह्मणभोजनं होमानन्तरं ब्राह्मणान् भोजयेदित्यर्थः । अथ तस्मिन् होमे हिरण्यं कनकं गौरश्वो वासो भूमिरिति चैता दक्षिणाः सुवर्णादिकमृत्विग्भ्यो दद्यादित्यर्थः । अथो एवं सामहोमानन्तरं अद्भुतादिसूचितो दोषः शाम्यत्येव । एषः यथोक्तषष्ठाध्यायप्रतिपादित एष होमः शान्त्यर्थः ऐन्द्राद्यद्भुतसूचितदुरितशान्त्यर्थः । द्विरुक्तिरादरार्था अध्याय समाप्तिद्योतनार्था वा ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
षष्ठप्रपाठके दशमखण्डः ।

---

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमार्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ २ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्रा-
ज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
द्वितीये षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
षष्ठाध्यायः समाप्तः ।

समाप्तश्चायं षड्विंशाख्यो ब्राह्मणग्रन्थः ।

---

५२ गायत्री व्याख्या ॥

५३ सांख्यदर्शन ( भाष्यसहित ) सांख्य प्रवचन भाष्य २

५४ भोजप्रबन्ध ॥।०

५५ नलोदय सटीक ॥ऽ

५६ ईश केन कठ प्रश्न मुण्ड माण्डूक्य (सटीक भाष्य) ५

५७ छान्दोग्य (उपनिषद्) सभाष्य सटीक ५

५८ तैत्तिरीय ऐतरेय श्वेताश्वतर (उपनिषद्) सभाष्य सटीक २

५९ बृहदारण्यक (उपनिषद्) सटीक सभाष्य १०

६० सुश्रुत वैद्यक ४

६१ शार्ङ्गधर (वैद्यक) १

६२ वेतालपञ्चविंशति ॥।०

६३ पातञ्जलदर्शन (सभाष्यसटीक) ४

६४ आत्मतत्त्वविवेक (बौद्धाधिकार) २

६५ मुक्तिकोपनिषत् ॥ऽ

६६ उपमान चिन्तामणि ।०

६७ नागानन्द नाटक १

६८ पूर्णप्रज्ञ दर्शनम् (मध्वस्वामि कृत भाष्य सहितम्) २

६९ चन्द्रशेखरचम्पू काव्य १

७० सामवेदस्य मन्त्र ब्राह्मणम् (भाष्य सहितम्) २

७१ सामवेदस्य आरण्यसंहिता सायणाचार्य कृत भाष्यसहिता १

७२ विद्धशालभञ्जिकानाटिका सटीक १

७३ कारण्डव्यूह (बौद्धशास्त्र) २

७४ कुवलयानन्द अलङ्कारचन्द्रिकाख्य टीका सहित २

७५ प्रियदर्शिका नाटिका सटीक ( श्रीहर्षविरचित ) ॥

७६ सारस्वत व्याकरण सटीक पूर्वार्द्धम् १।

७७ वासवदत्ता सटीक २

७८ ( कालिदास कृत ) पुष्पबाणविलास काव्य सटीक ॥

७९ महिष शतकम्, पदारविन्द शतकम्, स्तुतिशतकम्, मन्दस्मितशतकम्, कटाक्षशतकम् १

८० मनुसंहिता कुल्लूकभट्ट कृत टीका सहित १

८१ नैषधचरितम् (मल्लिनाथ कृत टीका सहित) १०

८२ चन्द्रालोक प्राचीन अलङ्कार ॥

८३ वीरमित्रोदय (स्मृतिशास्त्र) १०

८४ भावप्रकाश (वैद्यक) १०

८५ प्रबोधचन्द्रोदय नाटक सटीक २

८६ अनर्घराघवनाटक (मुरारिकृत) २

८७ दैवतब्राह्मणसभाष्य १

८८ षड्विंशब्राह्मणम् सभाष्य १

८९ मीमांसा परिभाषा ।०

९० अर्थसंग्रह (लौगाक्षीमीमांसा) ॥०

९१ रघुवंश सटीक १॥०

९२ मेघदूत सटीक ॥।०

९३ ईश्वरनिरूपणम् १

९४ ईश्वरानुमानचिन्तामणि
(गङ्गेशोपाध्याय कृत) १
९५ न्यायदर्शन सभाष्य सवृत्ति २॥०
९६ सटीक वाल्मीकिरामायण
बालकाण्डस्य प्रथमावधि
सप्तषष्टि सर्गपर्य्यन्तम् २
९७ सटीक वाल्मीकिरामायण
बालकाण्डस्य अष्टषष्टि सर्गावधि
सप्तसप्तति सर्ग पर्य्यन्तम् १
९८ मदनपालनिघण्टुः (वैद्यक) १
९९ संस्कृतशिक्षामञ्जरी प्रथमभागः /
१०० संस्कृतशिक्षामञ्जरीद्वितीयभागः।
१०१ साहित्यदर्पणम् (अलङ्कार) १॥०
१०२ श्रीहर्षचरित बाणभट्टकृत २
१०३ अमरकोष ॥०
१०४ वेदान्तसूत्र शङ्कराचार्य्य कृत
शारीरकभाष्य तथा गोविन्दा-
नन्द कृत टीका सहित १०
१०५ वेदान्तपरिभाषा १
१०६ वेदान्तसार सटीक १
१०७ सटीक निदान (वैद्यक) ४
१०८ कामन्दकी नीतिसार सटीक १
१०९ (दण्डिकवि कृत) मल्लिका-
मारुतप्रकरण सटीक २
११० अत्रि विष्णु, हारीत, याज्ञ-
वल्क्य उशना अङ्गिरा यम आप-
स्तम्ब, संवर्त्त कात्यायन बृहस्पति
पराशर व्यास शङ्ख लिखित दक्ष
गौतम शातातप वशिष्ठ प्रणीत

संहिता (धर्मशास्त्र) १
१११ मत्स्यपुराण
११२ चरकसंहिता (वैद्यक) सम्पूर्ण
११३ रसेन्द्रचिन्तामणि तथा रस
रत्नाकर (वैद्यक)
११४ भगवद्गीता शाङ्करभाष्य आनन्द-
गिरिकृतटीका तथा सुबोधिनीसमेत
११५ शब्दशक्तिप्रकाशिका १
११६ मालतीमाधव सटीक १
११७ सटीक भट्टिकाव्य ४
११८ सटीक काव्यप्रकाश ४
११९ सभाष्यशाण्डिल्यसूत्र ॥
१२० लघुकौमुदीव्याकरणम् ॥
१२१ महानाटकम् (हनुमन्नाटक)
१२२ दशरूपकम् (अलङ्कार) १॥
१२३ भोजचम्पू (भोजदेव कृ
चम्पूरामायणम्)
१२४ भारत चम्पू सटीक
१२५ मार्कण्डेयपुराणम्
१२६ गोलाध्यायः
१२७ गणिताध्यायः
१२८ पञ्चदशी (सटीक)
१२९ पातञ्जलदर्शनस्य भोजवृत्तिः
१३० शकुन्तलानाटक टीकासहित
१३१ शब्दरूपादर्श
१३२ बृहत्संहिता
वा वाराहीसंहिता ४।
१३३ तर्कामृत (जगदीशकृत) ।
१३४ द्वात्रिंशत्पुत्तलिका
१३५ उत्तररामचरित सटीक १।